ापिनी पाशहस्ता च त्रिशूलवरधारिनी,
ुबाणा शक्तिहस्ता च मयूरवरवाह्ना ।३३।

ायुधधरा वीरा वीरपानमदोत्कटा,
ासुधा वसुधारा च जया शाकम्भरी शिवा ।३४।

वेजया च जयन्ती च सुस्तनी शत्रुनाशिनी,
अन्तर्वत्नी वेदशक्तिर्वरदा वरधारिणी ।३५।

शीतला च सुशीला च वालग्रहविनाशिनी,
कुमारी च सुपर्वा च कामाख्या कामवन्दिता ।३६।

जालन्धरधराऽनन्ता कामरूपनिवासिनी,
कामबीजवती सत्या सत्यधर्मपरायणा ।३७।

स्थूलमार्गस्थिता सूक्ष्मा सूक्ष्मबुद्धिप्रबोधिनी,
षट्कोणा च त्रिकोणा च त्रिनेत्रा त्रिपुरसुन्दरी ।३८।

वृषप्रिया वृषारूढा महिषासुरघातिनी,
शुम्भदर्पहरा दीप्ता दीप्तपावकसन्निभा ।३९।

कपालकुण्डला दीर्घा शिवादूती घनध्वनिः ।४०।

सिद्धिदा बुद्धिदा नित्या सत्यमार्गप्रबोधिनी,
कम्बुग्रीवा वसुमती छत्रच्छायाकृतालया ।४१।

जगद्गर्भा कुण्डलिनो भुजकारशायिनी,
प्रोल्लसत्सप्तपद्मा च नाभिनालमृणालिनी ।४२।

मूलाधारा निराकारा वह्निकुण्डकृतालया,
वायुकुण्डसुखासीना निराधारा निराश्रया ।४३।

श्वासोच्छ्वासगतिर्जीवा ग्राहिणी वाह्निसंश्रया,
वह्निवल्लीतन्तुसमुत्थाना षड्रसास्वादलोलुपा ।४४।

तपस्विनी तपः सिद्धिः तापसी च तपः प्रिया,
तपोनिष्ठा तपोयुक्ता तपसः सिद्धिदायिनी ।४५।

सप्तधातुमयीमूर्तिः सप्तधात्वन्तराश्रया,
देहपुष्टिर्मनस्तुष्टिरन्नपुष्टिर्बलोद्धता ।४६।

औषधिर्वैद्यमाता च द्रव्यशक्ति प्रभाविनी,
वैद्या वैद्याचिकित्सा च सुपथ्या रोगनाशिनी ।४७।

मृगया मृगमांसादा मृगत्वङ्मृगलोचना,
वागुरा बन्धरूपा च वंधरूपा वधोद्धता ।४८।

बन्दी बन्दिस्तुताकारा काराबन्धविमोचनी,
शृङ्खला खलहा विद्युद्दृढबन्धविमोचनी ।४९।

अम्बिकाऽम्बालिकाचाम्बा स्वक्षा साधुजनार्चिता,
कौलिकी कुलविद्या च सुकुला कुलपूजिता ।५०।

कालचक्रभ्रमि भ्रान्ता विभ्रमा भ्रमनाशिनी,
वात्यालि मेघमाला च सुवृष्टिः सस्यवर्द्धिनी ।५१।

अकारा च इकारा च उकारैकाररूपिणी,
ह्रींकारी बीजरूपा च क्लींकाराम्बरवासिनी ।५२।

सर्वाक्षरमयीशक्तिरक्षरा वर्णमालिनी,
सिन्दूरारुणवक्त्रा च सिन्दूरतिलकप्रिया ।५३।

वश्या च वश्यबीजा च लोकवश्यविभाविनी,
नृपवश्या नृपैःसेव्या नृपवश्यकरी प्रिया ।५४ ।

महिषा नृपमान्या च नृमान्या नृपनन्दिनी,
नृपधर्ममयी धन्य धनधान्यविवर्द्धिनी ।५५ ।

चतुर्वर्णमयीमूर्तिश्चतुर्वर्णैश्चपूजिता,
सर्वधर्ममयीसिद्धिश्चतुराश्रमवासिनी ।५६ ।

ब्राह्मणी क्षत्रिया वेश्या शूद्राचावरवर्णजा,
वेदमार्गरता यज्ञा वेदविश्रववविभाविनी ।५७ ।

अस्त्रशस्त्रमयीविद्या वरशस्त्रास्त्रधारिणी,
सुमेधा सत्यमेधा च भद्रकाल्यऽपराजिता ।५७ ।

गायत्री सत्कृतिः सन्ध्या सावित्री त्रिपदाश्रया,
त्रिसन्ध्या त्रिपदी धात्री सुपर्वा सामगायनी ।५९ ।

पाञ्चाली बालिका बाला वालक्रीडा सनातनी,
गर्भाधारधरा शून्या गर्भाशयनिवासिनी ।६० ।

सुरारिघातिनीकृत्या पूतना च तिलोत्तमा,
लज्जा रसवती नन्दा भवानी पापनाशिनी ।६१ ।

पट्टाम्बरधरा गीतिः सुगीतिज्ञनिलोचना,
सप्तस्वरमयीतन्त्री षड्जमध्यमधैवता ।६२ ।

मूर्च्छनाग्रामसंस्थाना स्वस्था स्वस्थानवासिनी,
अट्टाहासिनी प्रेता प्रेतासननिवासिनी ।६३ ।

गीतनृत्यप्रियाऽकामा तुष्टिदा पुष्टिदाक्षया,
निष्ठा सत्यप्रिया प्रज्ञा लोकेशी च सुरोत्तमा ।६४।

सविषा ज्वालिनी ज्वाला विषमोहार्तिनाशिनी,
विषारिनार्गदमनी कुरुकुल्लाऽमृतोद्भवा ।६५।

भूतभीतिहरारक्षा भूतावेशविनाशिनी,
रक्षोघ्नी राक्षसी रात्रिर्दीर्घनिद्रा दिवागतिः ।६६।

चन्द्रिका चन्द्रकान्तिश्च सूर्यकान्तिर्निशाचरी,
डाकिनी शाकिनी शिष्या हाकिनी चक्रवाकिनी ।६७।

सितासितप्रिया स्वङ्गा सकला वनदेवता,
गुरुरूपधरा गुर्वी मृत्युर्मारी विशारदा ।६८।

महामारी विनिद्रा च तन्द्रा मृत्युविनाशनी,
चन्द्रमण्डलसंकाशा चन्द्रमण्डलवासिनि ।६९।

अणिमादिगुणोपेता सुस्पृहा कामरूपिणी,
अष्टसिद्धिप्रदा प्रौढा दुष्टदानवघातिनी ।७०।

अनादिनिधनापुष्टिश्चतुर्बाहुर्चतुर्मुखी,
चतुःसमुद्रशयना चतुर्वर्गफलप्रदा ।७१।

काशपुष्पप्रतीकाशा शरत्कुमुदलोचना,
भूता भव्या भविष्या च शैलजा शैलवासिनि ।७२।

वाममार्गरता वामा शिववामाङ्गवासिनी,
वामाचारप्रिया तुष्टा लोपामुद्रा प्रबोधिनी ।७३।

भूतात्मा परमात्मा च भूतभावविविभाविनी,
मङ्गला च सुशीला च परमार्थप्रबोधिका ॥७४ ।

दक्षिणा दक्षिणामूर्तिः सुदक्षिणा हरिप्रिया,
योगिनी योगयुक्ता, च योगाङ्गगा ध्यानशालिनी ॥७५ ।

योगपट्टधरा मुक्ता मुक्तानां परमागतिः,
नारसिंही सुजन्मा च त्रिवर्गफलदायिनी ॥७६ ।

धर्मदा धनदा चैव कामदा मोक्षदा द्युतिः,
साक्षिणी क्षणदा दक्षा दक्षजा कोटिरूपिणी ॥७७ ।

क्रतुः कात्यायनीं स्वच्छा स्वच्छन्दा च कविप्रिया,
सत्यागमा बहिःस्था च काव्यशक्तिः कवित्वदा ॥७८ ।

मेनापुत्री सती माता मैनाकभगिनी तडित्,
सौदामिनी सुधामा च सुधामा धामशालिनी ॥७९ ।

सौभाग्यदायिनीद्यौश्च सुभगा द्युतिवर्द्धिनी,
श्रीः कृत्तिवसना चैव कङ्काली कलिनाशिनी ।८० ।

रक्तबीजवधोद्द्रप्ता सुतनतुर्बीजसन्ततिः,
जगज्जीवा जगद्बीजा जगत्त्रयहितैषिणी ।८१ ।

चामीकररुचिश्चान्द्रीसाक्षयाषोडशीकला,
यत्तत्पदानुबन्धा च यक्षिणी धनदार्चिता ।८२ ।

चित्रिणी चित्रमाया च विचित्रा भुवनेश्वरी,
चामुण्डा मुण्डहस्ता च चण्डमुण्डवधोद्धुरा ।८३ ।

अष्टम्येकादशी पूर्णा नवमी च चतुर्दशी,
अमा कलशहस्ता च पूर्णकुम्भपयो धरा ।८४ ।

अभीरूभैरवी भीरू भीमा त्रिपुरभैरवी,
महारुण्डा च रौद्री च महाभैरवपूजिता ।८५ ।

निर्मुण्डा हस्तिनी चण्डा करालदशनानना,
कराला विकराला च घोरघुर्घुरनादिनी ।८६ ।

रक्तदन्तोर्ध्वकेशी च बन्धूककुसुमारुणा,
कादम्बरी पटासा च काश्मीरी कुङ्कुमप्रिया ।८७ ।

क्षान्तिर्बहुसुवर्णा च रतिर्बहुसुवर्णदा,
मातङ्गिनी वरारोहा मत्तमातङ्गगामिनी ।८८ ।

हंसा हंसगतिर्हंसी हंसोज्ज्वलशिरोरुहा,
पूर्णचन्द्रमुखी श्यामा स्मितास्या श्यामकुन्तला ।८९

मषी च लेखिनी लेखा सुलेखा लेखकप्रिया,
शङ्खिनी शङ्खहस्ता च जलस्था जलदेवता ।९०

कुरुक्षेत्रावनिः काशी मथुरा काञ्च्यवन्तिका,
अयोध्या द्वारका माया तीर्था तीर्थकरप्रिया ।९१ ।

त्रिपुष्कराऽप्रमेया च कोशस्था कोशवासिनी,
कौशिकी तु कुशावर्ता कौशाम्बी कोशवर्द्धिनी ।९२

कोशदा पद्मकोशाक्षीकुसुमा कुसुमप्रिया,
तोतुला च तुलाकोटिः कूटस्था कोटराश्रया ।९३ ।

स्वयम्भूश्च सुरूपा च स्वरूपा पुणयवर्द्धिनी,
तेजस्विनी सुभिक्षा च बलदा बलदायिनी ।९४ ।

महाकोशी महावर्ता बुद्धिः सदसदात्मिका,
महाग्रहहरा सौम्या विशोका शोकनाशिनी ।९५ ।

सात्त्विकी सत्त्वसंस्था च राजसी च रजोवृता,
तामसी च तमोयुक्ता गुणत्रयविभविनी ।९६ ।

अव्यक्ता व्यक्तरूपा च वेदविद्या च शाम्भवी,
शंकराकल्पिनीकल्पा मनः संकल्पसन्ततिः ।९७ ।

सर्वलोकमयी शक्तिः सर्वश्रवणगोचरा,
सर्वज्ञानवतीवाञ्छा सर्वतत्त्वानुबोधिनी ।९८ ।

जागृति च सुषुप्तिश्च स्वप्नावस्था तुरीयका,
सत्वरा मन्दगतिर्मन्दा मदिरामोदधारिणी ।९९ ।

पानभूमिः पानपात्रा पानदानकरोद्यता,
अघूर्णा रुणनेत्रा च किञ्चिदव्यक्तभाषिणी ।१०० ।

आशापूरा च दीक्षा च दक्षा दीक्षितपूजिता,
नागवल्ली नागकन्या भोगिनी भोगवल्लभा ।१०१ ।

सर्वशास्त्रवती विद्या सुस्मृतिधर्मवादिनि,
श्रुतिः श्रुतिधरा ज्येष्ठा श्रेष्ठा पातालवासिनी ।१०२ ।

मीमांसा तर्कविद्या च सुभक्तिर्भक्तवत्सला,
सुनाभिर्यातना जातिर्गम्भीरा भाववर्जिता ।१०३ ।

नागपाशधरामूर्तिरगाधा नागकुण्डला,
सुचक्रा चक्रमध्यस्था चक्रकोणनिवासिनी ।१०४ ।

सर्वमन्त्रमयी विद्या सर्वमन्त्राक्षारावलिः,
मधुस्रवा स्रवन्ती च भ्रामरी भ्रमरालका ।१०५ ।

मातृमण्डलमध्यस्था मातृमण्डलवासिनी,
कुमारजननी क्रूरा सुमुखी ज्वरनाशिनी ।१०६ ।

अतीता विद्यमना च भाविनी प्रीतिमञ्जरी,
सर्वसौख्यवती युक्तिराहारपरिणामिनी ।१०७ ।

निद्यानं पञ्चभूतानां भवसागरतारिणी,
अक्रूरा च ग्रहवती विग्रहा ग्रहवर्जिता ।१०८ ।

रोहिणी भूमिगर्भा च कालभूः कालवर्तिनी,
कलंकरहिता नारी चतुष्षष्ट्यभिद्यावती ।१०९ ।

जीर्णा च जीर्णवस्त्रा च नूतना नववल्लभा,
अजरा च रतिः प्रीतिः रतिरागविवर्द्धिनी ।११० ।

पञ्चवातगतिभिन्ना पञ्चश्लेष्माशयाधरा,
पञ्चपित्तवती शक्तिः पञ्चस्थानविबोधिनी ।१११ ।

उदक्या च वृषस्यन्ती बहिः प्रस्रविणी त्र्यहम्,
रजः शुक्रधरा शक्तिर्जरायुर्गर्भधारिणी ।११२ ।

त्रिकालज्ञा त्रिलिङ्गा च त्रिमूर्तिः त्रिपुरवासिनी,
अरागा शिवतत्त्वा च कामतत्त्वानुरागिणी ।११३ ।

प्राच्यवाची प्रतीचीदिक् उदीचीदिक् विदिग्दिशाम्,
अहंकृतिरहंकारा बलिमाया बलिप्रिया ।११४।

स्रुकस्रुवा सामिधेनी च सश्रद्धा श्राद्धदेवता,
माता मातामहि तृप्तिः पितृमाता पितामही ।११५।

स्नुषा दौहित्रिणी पुत्री पौत्री नप्त्री शिशुप्रिया,
स्तनदा स्तनधारा च विश्वयोनिः स्तनन्धयी ।११६।

शिशूत्सङ्गधरा दोला दोलाक्रीडाभिनन्दिनी,
उर्वशी कदली केका विशिखा शिखिवर्तिनी ।११७।

खट्वाङ्गधारिणी खट्वा बाणपुङ्खानुवर्तिनी,
लक्ष्यप्राप्तिः कलाऽलक्षा लक्ष्या च शुभलक्षणा ।११८।

वर्तिनी सुपथाचारा परिखा च खनिर्वृतिः,
प्राकारवलया वेला मर्यादा च महोदधौ ।११९।

पौषणीशोषणीशक्तिदीर्घकेशी सुलोमश,
ललिता मांसला तन्वी वेदवेदाङ्गधारिणी ।१२०।

नरासृक्पानमत्ता च नरमुण्डास्थिभूषणा,
अक्षक्रीडारतिः शारी शारिका शुकभाषिणी ।१२१।

शाम्बरी गारुडीविद्या वारुणी वरुणार्चिता,
वाराही मुण्डहस्ता च दंष्ट्रोद्धृतवसुन्धरा ।१२२।

मीनमूर्तिधरा मूर्त्ता वदान्या प्रतिमाश्रया,
अमूर्ता निधिरूपा च सालिग्रामशिलाशुचिः ।१२३।

स्मृतिः संस्काररूपा च सुसंस्कारा च संस्कृतिः,
प्राकृता देशभाषा च गाथा गीतिः प्रहेलिका ।१२४।

इडा च पिङ्गला पिङ्गा सुषुम्णा सूर्यवाहिनी,
शशिस्रवा च तालुस्था काकिन्यमृतजीविनी ।१२५।

अणुरूपा बृहद्रूपा लघुरूपा गुरुस्थिरा,
स्थावरा जङ्गमा देवी कृतकर्मफलप्रदा ।१२६।

विषयाक्रान्तदेहा च निर्विशेषा जितेन्द्रिया,
विश्वरूपा चिदानन्दा परब्रह्मप्रबोधिनी ।१२७।

निर्विकारा च निर्वैरा विरतिः सत्यवर्धिनी,
पुरुषाज्ञा च भिन्ना च क्षान्तिः कैवल्यदायिनी ।१२८।

विविक्तसेविनी प्रज्ञाजनयित्री बहुश्रुतिः,
निरीहा च समस्तैका सर्वलोकैकसेविता ।१२९।

सेवा सेवाप्रिया सेव्या सेवाफलविवर्द्धिनी,
कलौ कल्किप्रिया काली दुष्टम्लेच्छविनाशिनी ।१३०।

प्रत्यञ्चा च धनुर्यष्टिः खड्गधारा दुरानतिः,
अश्वप्लुचित्श्च वल्गाच सृणिः सन्मत्तवाराणा ।१३१।

वीरभूर्वीरमाता च वीरसूर्वीरनन्दिनी,
जयश्रीर्जयदीक्षा च जयदा जयवर्द्धिनी ।१३२।

सौभाग्यसुभगाकारा सर्वसौभाग्यवर्द्धिनी,
क्षेमङ्करी सिद्धिरूपा सत्कीर्तिः पथिदेवता । १३३।

सर्वतीर्थमयीमूर्तिः सर्वदेवमयीप्रभा,
सर्वसिद्धिप्रदाशक्तिः सर्वमङ्गलमङ्गला ।१३४।

सर्वमङ्गलमङ्गले शिवे सवार्थसाधिके। शरण्ये त्र्याम्बके गौरी नारायणि नमोऽस्त ते।। शरणागतदीनार्त परित्राणपरायणे सर्वस्यार्तिहरे देवि नारायणि नमोस्तुते। सर्वस्वरूपे सर्वेशे सर्वशक्ति समन्विते भयेम्यस्त्राहिनो देवि दुर्गे देवि नमोस्तुते।। सर्वाबाधा प्रशमन त्रैलोक्यस्याखिलेश्वरि एवमेवत्वयाकार्य मस्मद्वैरि विनाशनम्।। महाबले महोत्साहे महाभयविनाशिनि त्राहिमां देवि दुष्प्रेक्ष्ये शत्रूणां भयवर्द्धिनि। स्तुता सुरैः पूर्वमभीष्ट संश्रयात्तथा सुरेन्द्रेण दिनेषु सेविता। करोतु सा नः शुभहेतुरीश्वरी शुभानि भद्राण्यभिहन्तु चापदः।। रोगानशेषानपहंसि तुष्टा रुष्टा तुकामान् सकलानभीष्टान्। त्वामाश्रितानां न विपन्नराणां त्वामाश्रिता ह्याश्रयतां प्रयान्ति।। देविप्रसीद परिपालय नोऽरिभोतेर्नित्यं यथा सुरवधादधुनैव सद्यः। पापानि सर्व जगतां प्रशभं नयाशुउत्पातपाकजनितांश्च महीप सर्गान्।। देविप्रपन्नातहरें प्रसीद प्रसीद मातर्जगतोऽखिलस्य। प्रसीद विश्वेरिपाहिविश्वं त्वमीश्वरी देवि चराचरस्य। यासाम्प्रतं चैदूत दैत्यतापितैरस्मिाभिरीशा च सरैर्नमस्यते। या च स्मृता तत्क्षणमेव हन्ति नः सर्वापदा भक्ति विनम्र-मूर्तिभिः।। प्रणतानां प्रसीदत्वं देवि विश्वार्ति हारिणि त्रैलोक्य वासिनामीड्ये लोकानां वरदाभव।।

❖❖❖

## फल श्रुतिः

पुण्यं सहस्रनामेदमम्बाया रुद्रभाषितम्।
चतुर्वर्गप्रदं सत्यं नन्दिकेन प्रकाशितम् ।१३५।

नातः परतरो मन्त्रो नाता परतरः स्तवः।
नातः परतरा विद्या तीर्थं नातः परात्परम्। १३६।

ते धन्याः कृतपुण्यास्ते त एव भुवि पूजिताः।
एकवारं मुदा नित्यं येर्चयन्ति महेश्वरीम् ।१३७।

देवतानां देवता या ब्रह्माद्यैर्या च पूजिता।
भूयात्सा वरदा लोके साधूनां विश्वमङ्गला ।१३८।

एतामेव पुराऽऽराध्य विद्यां त्रिपुरभैरवीम्।
त्रैलोक्यमोहनं रूपमकार्षीद्भगवद्धरिः ।१३९।

इति रुद्रयामले तन्त्रे नन्दिकेश्वरसंवादे महाप्रभावो भवानीनामसहस्रस्तवराजः सम्पूर्णं ।।

## अथ इन्द्राक्षीस्तोत्रम्
### श्री गणेशाय नमः

ॐ अस्य श्री इन्द्राक्षीस्तोत्रमन्त्रस्य पुरन्दर ऋषि। अनुष्टुप् छन्दः श्री इन्द्राक्षी भगवती देवता। ह्रीं बीजम् श्रीं शक्तिः। क्लीं कीलकम्। गायत्री, सावित्री, सरस्वती कवचम्। आत्मनो वाङ्मनः कायोपार्जित पापनिवारणार्थे सकलकामनासिद्ध्यर्थे पाठे विनियोगः।

## अथ करन्यासः

ॐ लक्ष्म्यै अङ्गुष्ठाभ्यां नमः। ॐ भुवनेश्वर्यै तर्जनीभ्यां नमः। ॐ माहेश्वर्यै मध्यमाभ्यां नमः। ॐ वज्रहस्तायै अनामिकाभ्यां नमः। ॐ सहस्त्रनयनायै कनिष्ठिकाभ्यां नमः ॐ इन्द्राक्षी भगवत्यै करतलकरपृष्ठाभ्यां नमः।।

## अथ षडंगन्यासः

ॐ लक्ष्म्यै हृदयाय नमः। ? भुवनेश्वर्यै शिरसे स्वाहा। ॐ माहेश्वर्यै शिखायै वषट्। वज्रहस्तायै कवचाय हुं। ॐ सहस्त्रनयनायै नेत्राभ्यां वौषट्। ॐ इन्द्राक्षी भगवत्यै अस्त्राय फट्।

## ततः प्रणायामः

(इस मंत्र से प्राणायाम कीजिए)

मंत्र –ॐ ऐं ह्रीं श्रीं कलीं इन्द्राखी क्लीं
श्रीं ह्रीं ऐं स्वाहा।।

## अथ ध्यानम

ॐ इन्द्राक्षीं द्विभुजां देवीं पीतवस्त्रधरां शुभाम्।
वामेहस्ते वज्रधरां दक्षिणे चाभयप्रदाम्।।
सहस्त्रनेत्रां सूर्याभं नानालङ्कारभूषिताम्।
प्रसन्नवदनां नित्यामप्सरोगणसेविताम्।।
श्री दुर्गां सौम्यवदनां पाशाङ्कुशधरां पराम्।
त्रैलोक्यमोहनीं देवीं भवानीं प्रणमाम्यहम्।।
इन्दुग्रिसूर्यनयनां पाशाङ्कुशधरां परां।
द्विभुजां सिंहमध्यस्थां भजेहमऽभयङ्करीम्।।

## गायत्री

ॐ शचीपतये विद्महे, पाकशासनाय धीमहि,
तन्नो इन्द्रः प्रचोदयात् ।३।

## मूल मन्त्र

ॐ ह्रीं श्रीं इन्द्राक्षीं श्रीं पें स्वाहा ।।

## इन्द्र उवाच

इन्द्राक्षी नाम सा देवी दैवतैः समुदाहृता ।
गौरी शाकम्भरी देवी दुर्गानाम्नीतिविश्रुता ।१।

कात्यायनी महादेवी चन्द्रघण्टा महातपा ।
गायत्री सा च सावित्री ब्रह्माणी ब्रह्मविदिनी ।२।

नारायणी भद्रकाली रुद्राणी कृष्णपिङ्गला ।
अग्निज्वाला रौद्रमुखी कालरात्रिः तपस्विनी ।३।

मेघश्यामा सहस्त्राक्षी विष्णुमाया जलोदरी ।
महोदरी मुक्तकेशी घोररूपा महाबला ।४।

आनन्दा भद्रजानन्दा रोगहर्त्री शिवप्रिया ।
शिवदूती कराली च प्रत्यक्षा परमेश्वरी ।५।

इन्द्राणी चंद्ररूपा च इन्द्रशक्तिपरायणा ।
महिषासुरसंहर्त्री चामुण्डा गर्भदेवता ।६।

वारही नारसिंही च भीमा भैरवनादिनी ।
श्रुतिः स्मृतिर्धृतिर्मेधा विद्या लक्ष्मीः सरस्वती ।७।

अनन्ता विजया पूर्णा मनस्तोषाऽपराजिता ।
भवानी पार्वती दुर्गा हैमवत्यम्बिाऽशिवा ।
शिवा भवानी रुद्राणी शंकरार्धशरीरिणी ।८।

सदा सम्मोहनी देवी सुन्दरी भुवनेश्वरी।
सर्वमङ्गल मङ्गल्ये शिवे सर्वार्थ साधिके।
शरण्ये त्र्यम्बके गौर्रि नारायणि नमोस्तुते।९।

## फलश्रुतिः

एतैर्नामपदैर्दिव्यैः स्तुता शक्रेण धीमता।
आयुरारोग्यमैश्वर्य सुखसम्पत्तिकारकम्।१०।

क्षयापस्मारकुष्ठादि तापज्वरनिवारकम्।
शतमावर्तयेद्यस्तु मुच्यते व्याधिबन्धनात्।११।

आवर्तयेत्सहस्रेण लभते वाञ्छितं फलम्।
राजावश्यामवाप्नोति सत्यमेव न संशयः।१२।
लक्षमेकं जपेद्यस्तु साक्षाद्देवी स पश्यति।
त्रिकालं पठते नित्यं धनधान्य विवर्धनम्।१३।

अर्धरात्रे पठेत् नित्यं मुच्यते कर्मबन्धनात्।
ऐन्द्र-स्तोत्रमिदं पुण्यं जपे तु फलवर्धनम्।१४।

विनाशाय तु रोगाणामपमृत्यु हरत्युत।
राज्यार्थी लभते राज्यं धनार्थी विपलुं धनम्।१५।

इच्छाकामं तु कामार्थी धमार्थी धर्ममव्ययम्।
विद्यार्थी लभते विद्यां मोक्षार्थी परमं पदम्।१६।

इन्द्रेण कथितं स्तोत्रं सत्यमेव न संशयः।
।।इति श्री इन्द्राक्षीस्तोत्रं सम्पूर्णम्।।

◆◆◆

या माया मधुकैटभ प्रमथिनी या माहिषोन्मूलिनी।
या धूम्रेक्षण चण्ड मुण्ड मथिनी या रक्तबीजाशनी।
शक्तिः शुम्भनिशुम्भ दैत्य दलिनी या सिद्धलक्ष्मीः परा
सा देवी नवकोटि मूर्ति सहिता मां पातु महेश्वरी ज
पापहरं नतुं बलकरं सम्पूजितं श्रीकरं।
ध्यांत मानकरं स्तुतं धनकरं सम्भाषितं सिद्धिदम्।
गीतं सुन्दरि वाञ्छितं प्रतनुते ते पाद पद्मद्वयं।
भक्तानां भव भीति भञ्जनकरं सिद्धयषृदं पातुनः।
माया कुण्डलिनी क्रिया मधुमती काली कला मालिनी
मातङ्गी विजया जया भगवती देवी शिवा शाम्भवी।
शक्ति शङ्करवल्लभा त्रिनयना वाग्वादिनी भैरवी।
ह्रींकारी त्रिपुरा परापरमयी माता कुमारी त्यसि।।
अनेन मन्त्रपाठेन आत्मनो वाङ्मनः कायोपार्जितपा
निवारणार्थं श्रीइष्टदेवीप्रीत्यर्थं भगवती आमा का
चार्वङ्गी टङ्कधारिणी तारा पार्वती याक्षिण
श्रीशारिकाभगवती श्रीशारदाभगवती श्रीमहाराज्ञी भगव
श्रीज्वालाभगवती व्रीडाभगवती वैखारीभगव
वितस्ताभगवती गङ्गाभगवती यमुनाभगव
कालिकाभगवती सिद्धलक्ष्मीः महालक्ष्मीः महात्रिपुरसुन्द
सहस्रनाम्नीं देवी भवानी
सपरिवारा सवाहना सायुधा साङ्गा प्रीयतां प्रीता स्तु

❖❖❖

# भगवती लीला

श्री राज़-राजे़श्वरी आम.ति शरण छिय।
पुज़यि लागोय पम्पोश गुलाब मादल त. हिय।।
गौरी अम्बा अम्बुराक्षीम अहं ईडे

१. ज़गत अम्बा च़य छख मंज़ वदनस असनाव
निष्बुद्ध शुर्यन दयायि हुंद दामान प्यठ. त्राव
कल्याण. सोरत थाव स.ति अेश. फ्यरन भरन छिय -पू०

२. बाहन सिर्यन ज़चन चान्यन हुन्द प्रकाश
चरण चा'नी करान संकट. गटे छि नाश
तिह.न्ज़े गर.दि स.ति देव मुकट.जरन छिय -पू०

३. लोका लोकन ह.न्दि सत.जन कारण देव. गण
सिंहासनस चा'निस दिवान छिय प्रदिक्षण
परम दाम.कि पुरुष प्यवान परन छिय -पू०

४. षट्चक्र. रूपी च़क्र नागस छि न'नि नेरन
तेज़चि रेखायि च़ोपा'र्य त्रिकोणस फेरन
योगी ज्ञा'नी प्राणी सुय ध्यान धरन छिय -पू०

५. बुद्ध छन. वातन कम रंग चान्यन रंगन छिय
कामेश्वरी च्यय मन. कामनायन मंगन छिय
यछि चानि श्रद्धायि स'रित आयि स्तुतायि परन छिय -पू०

६. पनन्यन भक्तियन दासन हुंदुय प्ययनय पास
तिहन्दे पासै कुकर्मन हन्ज़ गटय म्य कास
ज्योति-स्वरूप हाव छय च्य भूतेश्वर.ञ द्र.य -पू०

७. भगवत् मायायि हं.दि रंग चा'नी छि़ रंगा रंग
चाने स.ती छुय योग छिय भोग छुय संत्संग
तप ज़प समाध क्रिया कर्म करन छिय -पू०

८. महा माया च.य छख चट असि मायां ज़ाल
असि वो.लमुत छुय गृहस्थ.कि काल. सर्पन नाल
ल'गिम.ति सा'रिय पनन्यन पनन्यन घरन छिय -पू०
९. कम भक्तियि किञ भक्तावारन खरन छिय
कथ कामि लगव क्या तगि जिन्दै मरन छिय
च.इ टेठ स'च़ चाञि स.ति अ'सि दिन दिन भरन छिय -पू०
१०.प्रसाद कर गाल ज़न्मा ज़न्मन ह.न्दि अपराध
सब्ज़ रंगय ज़लय मंज़ हाव पम्पोश. पाद
इम तिम स्वरण यथ भव.सरस तरन छिय -पू०
११.चाने सूती सृष्टि गयि न'ञी जय भ'विनय
मंज़ शून्य. उत्पत्त स्थित सां'प.नी जय भ'विनय
कलर जु.गच महाराज. रा'नी शरण छिय -पू०
१२.कुनुय यलि ओस वुछन वोला तस कुस ओस
ज़गत यस ज़ाव मा'जा मोला तस कुस ओस
च़ित शक्ती चाञे एक अनेक स्वरण छिय -पू०
१३.च्यय अज़पा गायत्री पांछ कारण ग्यवन छि गीत
निरित्रिगुण छख गुणन चान्यन स.ति परतीत
चाने स.तिकार अन्तःकरण करन छिय -पू०
१४.अनेक नागन प्यठ चोन निर्वासन आसन
प्यठ शेष, नागस विष्णु रुपय छख भासन
सा'रिय गुण चा'नि महा पुरुषय वरन छिय -पू०
१५.च्यय किति नाना रंगै भोजन रनन छिय
च्यय निश सुवर्ण बानन ल'दित अनन छिय
नाना रंगव मिठायव थाल भरन छिय -पू०
१६.चाञे दयायि स.ति क'डि बडयूव ब'डि-ब'डि नाव
निष्बुद्ध 'कृष्णस' निश वा'णी हुंद अमृत द्राव
परण वाल्यन ज़न्मन हन्दि दुख हरण छिय -पू०

♦♦♦

हे दयालु छुस ब. चञ्चल. लोलो।
अनुग्रह. चानि बेमार बल. लोलो।।

१. कर्म.हीन छुस आमुत संसारस
चन्द. छोन छुस लुोगमुत व्यवहारस
अविद्यायि ह'न्ज़ छम गांगल. लोलो अनु०

२. लय विक्षेप भय. स.ति छुम आवरण
मल खो.तमुत छुम अन्तः करणन
विवेक. पाञि पान बो छल लोलो अनु०

३. जान ज़ा'नि ज़ांह तिनो ज़ोनमख च़य
ज़ान दिम तिछ ज़ा'नित तव गलि दुय
दिम निश्चय युथन. ज़ांह डल. लोलो अनु०

४. छुस ब. लो.गमुत संसार. सर. सय मंज़
रोवमुत छुस पननिस घर.सय मंज़
ध्यान स.ति ज़ाल ज्ञान. मशअल. लोलो अनु०

५. प्योमुत छुस गटि मंज़ अनतम गाश
त्युथ गाश हाव युथ नो.न छु सिर्यि प्रकाश
का'फी छम चा'ञ अख वुज़मल. लोलो अनु०

६. बान. हीन बो द्रास खान. गदाये
अंग हीन छुस फेर. कोत जायि जाये
दिम भिक्षा अनुग्रह. खल. लोलो अनु०

७. यम्बर ज़ल बो.म्बरो छय यो प्रारान
वेरि चाञ पान छस पा'रावान
वन वन. छस व्र'च आरवल. लोलो अनु०

८. लोल. बागस फ'लिमो गुल त. गुलज़ार
पोशनलो अज़ वलो छावु सब्ज़ार
होश दिम युथ पोश. वा'र फो.ल लोलो अनु०
९. हा 'विष्णो' पननुय पान ज़ानतन
यलि ज़ानक त्यलि बनि सरतलि सो'न
चित आ'नस करत. स-कल लोलो अनु०

♦♦♦

## शिव आरती

ॐ अतिभीषण कटुभाषण यमकिङ्कर पटली
कृतताडन परिपीडन मरणागम समये।
उमया सह मम चेतसि यमशासन निवसन्
शिवशंकर शिवजी शंकर हर मे हर दुरितम।
अतिदुर्नय चटुलेन्द्रिय रिपुसंचय दलिते
पविकर्कश कटुजल्पित खलगर्हण चलिते।
शिवया सह मस चेतसि शशिशेखर निवसन्
शिवशंकर ....
भवभञ्जन सुररञ्जन खलवञ्चन पुरहन्
दनुजान्तक मदनान्तक रविजान्तक भगवन्।
गिरिजावर करुणाकर परमेश्वर भयहन्
शिवशंकर ....
शक्रशासन कृतशासन चतुराश्रम विषये
कलिविग्रह भवदुर्ग्रह रिपुदुबर्ल समये
द्विज क्षत्रिय वनिता शिशु दरकम्पित हृदये
शिवशंकर ....

भवसम्भव विविधामय परिपीडितवपुषं
दयितात्मज ममतांभर कलुषींकृत हृदयम्।
कुरू मां निज चरणार्चिन निरतं भव सततं
शिवशंकर .....

♦♦♦

नागेन्द्रहाराय त्रिलोचनाय भस्मांगरागाय महेश्वराय।
देवाधिदेवाय दिगम्बराय तस्मै नकाराय नमः शिवाय।।
मातंगचरमाम्बर-भूषणाय समस्तगीर्वाण-गणार्चिताय,
त्रैलोक्य-नाथाय पुरान्तकाय तस्मै मकाराय नमः शिवाय।।
शिवा-मुखाम्भोज-विकासनाय दक्षस्य यज्ञस्य विनाशकाय
चन्द्रार्क-वैश्वानरलोचनाय, तस्मै-शिकाराय नमः शिवाय।।
वशिष्ठकुम्भोत्‌भवगौतमादि मुनीन्द्र वन्द्याय गिरीश्वराय।
श्रीनीलकण्ठाय वृषध्वजाय तस्मै वकाराय नमः शिवाय।।
यज्ञस्वरूपाय जटाधाराय पिनाकहस्ताय सनातनाय,
नित्याय शुद्धाय निरंजनाय तस्मै यकाराय नमः शिवाय।।
वपुष्प्रादुर्भावात् अनुमितम - इदं - जन्मनि पुरा।
पुरारे ! नैवाहं क्वचित् - अपि भवन्तं प्रणतवान्।।
नमन्मुक्तः सम्प्र-त्यतनुर-अहम-अग्रे प्यनतिमान्-महेश !
क्षन्तव्यं तत्-इदम्अपराध-द्वयम्-अपि
करचरणकृतं वाक्-कायजं कर्मजं वा श्रवण-नयनजं वा
मानसं वा पराधम्।
विदितम्-अविदितं-वा सर्वम्-एतत्-क्षमस्व जय जय
करणाब्धे श्रीमहादेव शम्भो।।

♦♦♦

# विष्णु स्तुति

शांताकारं भुजगशयनं पद्मनाभं सुरेशं
विश्वाधारं गगनसदृशं मेघवर्ण शुभाङ्गम्
लक्ष्मीकान्तं कमलनयनं योगिभिर्ध्यानगम्यं
वन्दे विष्णुं भवभयहरं सर्वलोकैकनाथम्।

♦♦♦

ॐ जय नारायण जय पुरुषोत्तम जय वामन कंसारे
उद्धर मामऽसुरेशविनाशिन् पतितोऽहं संसारे।
घोरं हर मम नरकरिपो केशव कल्मषभारं
मामऽनुकम्प्य दीनमऽनाथं कुरु भव-सागरपारं।

घोरं हर .....

जय जय देव जयासुरसूदन जय केशव जय विष्णो
जय लक्ष्मी मुखकमलमधुव्रत जय दशकन्धर जिष्णो।

घोरं हर .....

पुनरऽपि जननं पुनरऽपि मरणं पुनरऽपि गर्भनिवासं
सोढुम-ऽलपुनरऽस्मिन्माधव मामुद्धुर निजदासम्।

घोरं हर .....

त्वं जननी जनकः प्रभुरऽच्युत त्वं सुहृतकुलमित्रम्
त्वं शरणं शरणागतवत्सल त्वं भवजलधिवहित्रम्।

घोरं हर .....

जनकसुतापति चरणपरायण शंकर मुनिवर गीतं
धारय मनसि कृष्ण पुरुषोत्तम वारय संसृतिभीतिम्।

घोरं हर .....

♦♦♦

# भैरव स्तुति

व्याप्तचराचर भावविशेषं
        चिन्मयमेकम् अनन्तम् अनादिम्।
भैरवनाथम् अनाथ शरण्यं
        तन्मयचित्तंतया हृदि वंदे।।
त्वन्मयमेतदऽशेषम् इदांनीं
        भाति मम त्वद् अनुग्रह-शक्त्या।
त्वं च महेश ! सदैव ममात्मा
        स्वात्ममयं मम तेन समस्तम्।।
स्वात्मनि विश्वगते त्वयि नाथे
        तेन न संसृतिभीतिः कथाऽतरस्ति।
सत्स्वपि दुर्धर दुःख विमोह
        त्रास विधायिषु कर्मगणेषु।।
अन्तक ! मां प्रति मा दृशमैतां
        क्रोध करातल मां विदधीहि।
शंकर सेवन चिन्तन धीरो
        भीषण भैरव शक्तिमयोऽस्मि।।
इत्थमउपोद भवन्मय संविद्-
        दीधितिदारित भूरितमिस्रः।
मृत्यु यमान्तक कर्मपिशाचै-
        र्नाऽथ नमोस्तु न जात बिभेमि।।
प्रोदित सत्य विबोध मरीचि
        प्रोक्षित विश्वपदार्थ सतत्त्वः।
भाव परामृत निर्भर पूर्णे
        त्वय्यऽहमात्मनि निर्वृतिमेमि।।
मानस गोचरमेति यदैव
        क्लेश दशाऽतनु ताप विधात्री।
नाथ ! तदैव ममत्वदभेद-

स्तोत्र परांमृतवृष्ट्रिर उदेति।।
शंकर ! सत्यमिदं व्रतदान-
स्नान तपो भवताप विनाशी
तावक शास्त्र परामृत चिन्ता
सिंध्यति चेतसि निर्वृतिंधारा।।
नृत्यति गायति हृषयति गाढं
संविदियं मम भैरवनाथ।
त्वां प्रियमाप्य सुदर्शनमेकं
दुर्लभम अन्यजनैः समयज्ञम्।।
वसुरसपौषे कृष्णदशम्या-
अभिनवगुप्तः स्तवमिम करोत्।
येन विभु र्भव मरुसन्तापं
शमयति झटिति जनस्य दयालुः।।

♦♦♦

बह्मेन्द्र-रुद्र-हरि-चन्द्र-सहस्र-रश्मि-
स्कन्द-द्विपानन-हुताशन-वन्दितायै।
वागीश्वरि ! त्रिभुनेश्वरि ! विश्वमातः
अर्न्त-वहिश्च कृत-संथितये नमस्ते।

## अर्थ

सरस्वती त्रपुर सोन्दरी ज़गत माता,
बवनेश्वरी छख आसवन्य च्अय
ब्रह्मा रोदुर इन्द्र सिर्ययि चन्दरम कुमार
वेष्णु गणेश छुय पुज़ान चेय।
अन्दर ने'बर वातिथ त्रोबवनस सा'र्यसय,
गुल्य गन्डिथ म्योन प्रणाम वातिनय च्यय
अयि शरण च्य माता विन्य किन छीय नमिथय

♦♦♦

## प्रातः कालस

आनन्द-सुन्दर-पुरन्दर मुक्त-माल्यं'
मौ-लौ हठेन निहितं, महिषा-सुरस्य
पादाम्बुज़ं भवतु म् विजयाय मञ्जु
मञ्जीर-शिञ्जित-मनोहरम्-अम्बिकायाः

## अर्थ

पाद चा'न्य सोन्दर आनन्द दायक,
यन्द्राज़न त्राव यथ मोख्त माल,
ये'मि सू'त्य ज़ीर दिच़थ महिषासुरसय
क्षण मात्रस मंज़ वोत सु पाताल।
सुय रोनि पाद चोन रुज़्यतन में हृदयस,
युथब' अम्बिकाय बोज़ श्रोनि श्रोनि ताल।।
सुय मनोहर पाद ब'न्यतन में हीतो जै जै
कारुक मैं हाव्यतन कमाल।।

## भजन

प्रातः काल आव म्य'ति अन्तय गाश माता
छम चा'ञ आश म्य'ति पूरण कर।
लटि मुख हाव, मोह गटि करत नाश माता,
छम चा'ञ आश म्य'ति पूरण कर। प्रात'।
जन्मादि जन्मन ग्यूर आम फेरान,
छुस हालि हा'रान डेंशन कर
जल हाव मुख पनुन छुम न बरदाश माता।। छम०
भक्ति भाव सतिन वति चाजि नेरय,
कति छख आसान पैगाम सोज़।
नतः दिम पननुय प्रोन यादाशत माता।। छम०

मोह गटि मंज़ छुस वथ छमन, ईवान,
सत्गुर हावतम सत चिय वथ
वथ हावि नो'न त्राव सूर्य प्रकाश माता।। छम०
हनि हनि फयूरूस हयथ मनि कामन,
शहरन त ग़ामन कति आसि म्यज।।
छखय पाताल किन छख च आकाश माता।। छम०
निर्वासन वनत कति चोन आसन,
अन्धकार कास्तम वन्दय्य प्राण।।
करतम सोदि वाञ्जि हिश बाश माता।। छम०
कल्पनाय रुसतुय कल हय वन्दयये,
कलि चाञि रा'वम न्यंदर त नेह'
वोल वोञ 'विष्णस चलि अभिलाष माता।। छम०

♦♦♦

## माजि ज़ार'पार

राथ ग'यि सा'रय प्रकाश नोन द्राव।
मा'ज भवान्य आ'रतिस म्य दर्शुन च़ हाव।
लूसस वुछान वुछान रा'त्य रातस,
ज़ागान रुदुस बो ये'थ्य सातस
कर सना वुछि बो' चानि मोखकुय प्रभाव।।
मा'ज भाव'न्य आरितिस म्य दर्शुन च हाव।।
प्रारान वोतुम स्यठा यच्काल,
मा'ज भावन्य योद छख च दीन दयाल।
दासस म्य प्यठ थाव च अनुग्रेह स्वभाव।।
मा'ज भवान्य आर'तिस म्य दर्शुन च हाव।।
गाश आव चोपार सार्सय जगतस,
म्यय याच़ गट छम अन्दर हृदयस।

गट, कास अन प्रकाश हृदय म्य फोलनाव।।
माज़ भवान्य आरतिस म्य दर्शुन च हाव।।
कस वन च्य रोस माज कुस छु म्योनुय,
आशा वोमेद सथ डोख में चोनुय।
दित में भवसर तार, तार म्यान्य नाव।।
मा'ज भवान्य आरतिस म्य दर्शुन च हाव।।
भवसागररस मंज़ छुस बो फोटमुत,
थफ़ करुम नत यिर छुस सपुदमुत।
कड न्यबर म्य अमि मन्ज़ वोन्य म्य मोकलाव।
मा'ज भवान्य आरतिस म्य दर्शु न च हाव।।
छुस अनाथ मा'ज म्योन यीतनय चै आर,
चानि दयाये बापथ छुस बो बेमार
मिसकीनस दया दृष्टि म्य त्राव।।
मा'ज भवान्य आरतिस म्य दर्शुन च हाव।।
छम म्य यन्द्रेय पननि करान छ्रट छ्रट
तंबलावान छम में वेषयन प्यठ।
सथ संगचे नावि वोन्य म्य बेहनावं।।
मा'ज भवान्य आरतिस म्य दर्शुन च हाव।।
छुस मुसाफिर बो द्रामुत सफररस।
छुस दिवान कदम कदम बो यथ्य मज़िलस।।
वार, पा'ठय म्योन सफर अंद च वातनाव।।
मा'ज भवा'न्य आरतिस म्य दर्शुन च हाव।।
नावि छुस बिहिथ भवसागररस
पय छुमन, लग कोत त कथ तरफस।
परम पदसय कुन च लाग म्यान्य नाव।।
मा'ज भवान्य आ'रतिस म्य दर्शुन च हाव।।

◆◆◆

# लीला

ब ज़ाअरी गोश थावतम ही भवानी
च्य रोस्तुय रछवुन छुय कॉंह न म्योनय।।
च्य दीवी सर वन्दय शेरस त पादन।
च़ माता गोश थावत्म फरियादन।।
छु चंचल मन म्य गोतम केन्च़काला।
बचुन मुशिकल यिवान छुम अमि हालय।।
दवाये दर्द दीवी कर म्य पानय।
तबीबन हन्ज़ तबाबत छम ब्रानय।।
व्यन्य दअदिस म्य वारतव छम्नअ कॉंह ब्रान्थः।
दिलस छुम राग चोनय दोह त रात।।
ब छुस चअनिस भरस तल हुन्य सअन्ध पअठ्य।
म्यअ छमना चअन्यि छ्यअटि लुकमय स्यठा टअठ्य।
दया युदवय करख मअज्य क्याह गछी कम।
च छख पानय बअ कुस छुस कासतम गम।।
च्य निश युस लोल ओश त्रावि दारि दारि।
तमिस छख पान हावान ब्रोन्ठ चारे।।
सतन बवनन् हिंज़ छख आदि शक्ति।
शरण आमुत छुस्य व्यन दी म्य मुक्ति।।
सु'री युस नाव च्योन गोड़िनियथ।
सु गच्छना शेव लोकस क्या छि बअड कथ।
ब छुस प्योमत पथर अथ रूट करखना।
म्य दिख दर्शुन शुभ वर्शुन करखना।।
ब छुस आन'ज़ाज मंज़ करतम गट् दूर।
दितम शन्ति कुठ्यन ताकत अच्छन नूर।।

मेय रुटमय दामनय चो'न सारी वान्से।
च्य रुसतिय पतय लारान छुस न क'न्से।।
हेमथ खोनिय मंज़ ठोकुर गोड़ दिमयना।
छल्य दोद् खउर चरण अमृत चमयना।।
म्य करिमय रअत रातस वील तू ज़ार।
ब छुसनय भक्त च्योनय यीतनय आर।।
कलम तुल कर्मलीखा म्यअन्य नव लेख।
ललाटस यथ म्य हिकारअक़ य अछर लेख।।
वुछख यिम हअल्य अछर तिम नहाव नावतम।
छिम यिम स्यद तिम ति सोबूत थावतम।।
छि यिम पअन्चय अछर लेखन्य न ज्यादय।
गुड़न्य मअज़्य दूर करतम भूमि प्यठ व्याध।।
दुयुम मअज्य शत्रु कांह पोरुन गुछ़म ना।
असर मारिथ त्रयुम रोशुन गुछम ना।।
छ चूरिम कथ यहय म्यअनिस मनस मंज़।
रछुम पनन्यन पादन तल छुम गोमुत क्रंज़।।
यि प'च्युम प्राण म्योन लारान पतय छुय।
शुभ दर्शुन अमृत वर्शुन करुम चअय।।
च्य छुय वोनमुत ब छस बोज़ान तिहन्दय ज़ार।
यमिस नय आसि वननस कां'सि निश वार।।
खबर छा, कोन छख अद म्योन बोज़ान।
गयम मा ज़्यव म्य कअज्य तव छख न बोज़ान।।
च्य कथसना जाय छख मऽज नख्बर नेर।
ब छुस सन्ताप सीत् दोदमुत मअ कर चेर।।
च्यनिश वअतिथ गच्छान छः कांह ति महरूम।
पनुन अथ ड़ालतम छुस ना बअ मासूम।।

म्य स्नच़यथ पननि वन्सें केंह करुम नः।
दितम दर्शुन अघ्य म्अज केंह गोछिमनेय।।
नियाज़ोनज़ीर म्यज क्या बअ थवाय।
पनुन अवहाल योत वसिथ पानय् बावय।।
मंगुन छुम नय तगान बोजुन तगान छुय।
लकुट शुर माजि यिथ पअठय दुध मंगान छुय।।
पराकन्दह छुसय च़अनिस बरस तल।
दिलक्य मुशिकल म्य माता करतम अज़ हल।।
बअ युदवे म्अज ज़ांह चीर वातय।
च मत् म'शरावतम् कुनि सातय।।
दया द्रष्टी मय करत्य मअज भवानी।
च छखना आसवज त्रयलूक़ सानी।।
म्य छम विनती कुनी वज्य ही भवानी।
बअ रटहय हृदयस मंज़ पाद च्यअनी।।
बअ करहय लोल अशि सूत्य यिमन श्रान।
छलय वथरय तअ वथरावय पनुन प्राण।।
करान रोज़हय बअ न्यथ सुमरण यि च्यनी।
सुरान रोज़ह दुहय शिव शिव भवानी।।
यहअय विनती म्य माता करत मन्जूर।
दितम माता परम सोख करतस दोख दूर।।
कुलफ यिथ पाठय छिं मुचरान कादखानन।
ग़छान ब्योन ब्योन छि तिम पनन्यन मकानन।।
तिथय पाठय गम मज करतम मे आज़ाद।
छुनय फर्ययाध्य आमुत बोज़तम ज़ार।।

♦♦♦

## शिवमह्मिनः स्तोत्रम्

कर्पूरं गौरं करुणावतारं
संसारसारं भुजगेन्द्रहारम,
सदारमन्तं हृदयार विन्दे
भवं भवानी सहितं नमामि।।

## ॐ नमः शिवाय।

आधीनामगद्यदिव्यं व्याधीनां मूलकृन्तनम्
उपद्रुवानां दलनं महादेवमुपासमहे।।
अहं पापीपापक्षिपण निपुणाः शंकर भवान्
अहं भीतोऽभीता भय वितरणे ते व्यसनिता
अहं दीनो दीनो द्धरणविधिसज्जरस्त्वमितरन्न
जानेऽहं वक्त्वं करु सकल शोचे मयि कृपाम
जनास्त्वत्पादाब्जश्रवणमननध्यान निपुणः।
स्वयं ते निस्तीर्णा न खलु करुणा तेषु करणा
भवे लीने दीने मयिमनन हीने न करुणा
कथंनाथ ख्यातस्तुमसि करुणा सागर इति।।

♦♦♦

## शिव महिम्ना स्तोत्रम्

### पुष्प दन्त उवाच

ॐ महिम्नः पारं ते परम विदुषो यद्य सदृशी
स्तुतिर् ब्रह्मादीनाम् अपि तदवसन्नस्त्वयि गिरः
अथावाच्यः सर्वः स्वमति परिणामावधि गृणन्

ममाप्येषस्तोत्रे हर ! निर् अपवादः परिकरः (१)

अतीतः पन्थानं तव च महिमा वाङ् मनसयोर्-
अतत् व्यावृत्त्या यं चकितम् अभिधते श्रुतिर् अपि
स कस्य स्तोतव्यः कतिविधेगुणः कस्य विषयः
पदे त्वर्वाचीने पतति न मनः कस्य न वचः (२)

मधु स्फीता वाचः परमम् अमृतं निर्मितवत
स्तव ब्रह्मन् किं वागऽपि सुरगुरोर्विस्मय पदम्
मम त्वेतां वाणीं गुण कथन पुण्येन भवतः
पुनामीत्य,र्थेऽस्मिन् पुरमथन ! बुद्धि,र्व्यवसित (३)

तवैश्वर्य यत् तत् जगत् उदय रक्षा प्रलय कृत्
त्रयी वस्तु व्यस्तं तिसृषु गुण भिन्नासु तनुषु।
अभव्यानाम् अस्मिन् वरद रमणीयाम् अरमणीम्
विहन्तुं व्याक्रोशीं विदधत इहैके जडधियः (४)

किम् ईहः किं कायः स खुल किमुपाया,स्त्रिभुवनम्
किम् आधारो धाता सृजति किम् उपादनं इति च
अतर्कऽयै श्वर्य्ये त्वय्यनवसर दुःस्थो हतधियः
कुतर्कोऽयं कांश्चित् मुखरयति मोहाय जगतः (५)

अजन्मानो लोकाः किम् अवयम वन्तोपि जगताम्
अधिष्ठातारं किं भव विधिर् अनादृत्य भवति।
अनीशो वा कुर्यात् भुवन जनने कः परिकरो
यतो मन्दारस्त्वां प्रत्यमरवर ! संशोरत इमे (६)

त्रयी सांख्यं योगः पशुपति मतं वैष्णवम् इति

प्रभिन्ने प्रस्थाने परम् इदम अदः पथ्यम् इति च
रुचीनां वैचित्र्यात् ऋजु कुटिल नाना पथ जुषाम्
नृणाम् एको गम्यः त्वमसि पयसाम् अर्णव इव (७)

महोक्षः खट्वांगं परशुर् अजिनं भस्म फणिनः
कपालं च इति इयत तव वरद। तन्त्रोपकरणम्।
सुरास्ता ताम् ऋद्धिं दधति तु भवतु भ्रू प्रणिहितां
नहि स्वात्मा रामं विषय मृग तृष्णा भ्रमयति। (८)

ध्रुवं कश्चित् सर्वं सकलम् अपरस्त्व ध्रुवम् इदं
परो ध्रौव्या ध्रौव्ये जगति गदति व्यस्त विषये।
समस्ते,अपिएतस्मिन् पुरमथन ! तैर्विस्मित इव
स्तुवन् जिगह्रेमि त्वां न खलु ननु धृष्टा मुखरता (९)

तवै श्वर्यं यत्नात् यत् उपरि विरंचिः हरिर् अधः
परिच्छेत्तुं यातौ अनलम् अनलस्कन्ध वपुषः।
ततो भक्ति श्रद्धा भर गुरू गृणत् भ्यां गिरिश ! यत्
स्वयं तस्थे ताभ्यां तव किम् अनुवृत्तिर्न फलति (१०)

अयत्नादासा त्रिभुवनम् अवैर व्यतिकरम्
दशास्यो यत् बाहून अभृत रण कण्डू पर वशान्
शिरः पद्म श्रेणी रचित चराणाम्भोरुह बलेः
स्थिरायास्तवत् भवतेः त्रिपुर हर ! विस्फूर्जितं इदम् (११)

अमुष्य त्वत् सेवा सम् अधिगत सारं भुजवनम्
बलात् कैलासेऽपि त्वत् अधि वसितौ विक्रम यतः
अलभ्या पातालेऽप्यलस चलितांगुष्ठ शिरसि
प्रतिष्ठा त्वय्यासीद् ध्रुवम् उपाचितो मुह्यति खलः (१२)

यत् ऋद्धिं सुत्राम्णो वरद ! परमोच्चैर् अपि सतीम
अधश्चक्रे बाणः परिजन ।विधेय त्रिभुवनः।
न तत् चित्रं तस्मिन् वरि वसितरि त्वत् चरणयोः
न कस्या प्युन्नत्यै भवति शिर सस्त्व्य्यवनतिः (१३)

अकाण्ड ब्रह्माण्ड क्षय चकित देवासुर कृपा
विधेयस्याऽऽसीत् यस्त्रिनयन विषं संहृतवतः
स कल्माषः कण्ठे तव न कुरुते न श्रयम् अहो
विकारोऽपि श्लाध्यो भुवन भय भंग व्यसिननः (१४)

अंसिद्धार्थो नैव क्वचित् अपि सदेवासुर नरे
निवर्तन्ते नित्यं जगति जयिनो यस्य विशिखाः
स पश्यन् ईश त्वाम् इतर सुर साधारणम् अभूत
स्मरः स्मर्तव्यात्मा नहि वशिषु पथ्यः परिभवः (१५)

मही पादाघातात् व्रजति सहसा संशयपदम्
पदं विष्णोर् भ्राम्यत भुज परिघ रुग्ण ग्रह गणम्।
मुहुर् द्यौरद्यौर्स्थ्यं यात्यनिभृत जटा ताडित तटा
जगत् रक्षायै त्वं नटसि ननु वामैव विभुता (१६)

वियत् व्यापी तारागण गुणित फेनोत् गम रुचिः
प्रवाहो वारां यः पृषत लघु दृष्टः शिरसि ते।
जगत् द्वीपाकारं जलधि वलयं तेन कृतमि-
त्येनेनै वौन्नेयं धृतमहिम दिव्यं तव वपुः (१७)

रथः क्षोणी यन्ता शतधृतिर् अगेन्द्रो धनु रथो
रथांगे चन्द्रार्को रथ चरण पाणिः शर इति।
दिधक्षोस्ते कोऽयं त्रिपुर तृणम् आडम्बर सिधिः
विधेयैः क्रीडन्त्यो न खुल परतन्त्राः प्रभुधियः (१८)

हरिस्ते साहस्रं कमल बलिम् आधाय पदयोः
यत् एकोने तस्मिन् निजम् उदहरत् नेत्र कमलम्
गतो भक्त्युद्रेकः परिणतिम् असौ चक्रवपुषा
त्रयाणां रक्षाये त्रिपुर हर ! जागर्ति जगताम्। (१९)

क्रतौ सुप्ते जाग्रत्वमसि फल योगे क्रतुमताम्।
क्व कर्म प्रध्वस्तं फलति पुरुषाराधन मृते।।
अतस्त्वां सम्प्रेक्ष्य क्रतुषु फलदान प्रतिभुवम्,
श्रुतौ श्रद्धां बद्ध्वा दृढ़परिकरः कर्मसु जनः (२०)

क्रियादक्षो दक्षः क्रतुपतिर् अधीशस्तनु भृताम्-
ऋषीणाम् आर्त्विज्यं शरणद ! सदस्याः सुरगणाः
कृतृभ्रंशस्त्वतः क्रतुफल विधान स्यसनिनो
ध्रुवं कर्तुः श्रद्धा विधुरम् अभिचाराय हि मरवाः (२१)

प्रजानाथं नाथ ! प्रसभमृभिकं स्वां दुहितरं
गतं रोहित् भूतां रिरमयिषुमृष्यस्य वपुषा
धनुष्पाणेर्यातं दिवम् अपि सपत्रा कृतम् अमुम्
त्रसन्तं तेऽद्यापि त्यजति न मृगव्याध्या रभसः (२२)

अपूर्वं लावण्यं विवसन तनोस्ते विमर्शतां
मुनीनां दाराणां समजनि सकोप व्यतिकरः
यतो भग्ने गुह्येसकृत् अपि सपर्यां विदधतां
ध्रुवं मोक्षोऽश्लीलं किम् अपि पुरुषार्थ प्रसवि ते (२३)

स्वलावण्या शंसा धृत धनुषम् अह्न् नाय तृणवत्
पुरः प्लुष्टं दृष्ट्वा पुर मथन ! पुष्पायुधम् अपि
यदि स्त्रैणं देवी यम निरत देहार्ध घटनात्
अवैति त्वाम् अद्धा वत वरद ! मुग्धा युवतयः (२४)

श्मशनेष्वा क्रीडा स्मर हर ! पिशाचाः सहचराः
चिता भस्मा लेपः स्रुक् अपि नृकरोटि परि करः
अमंगल्यं शीलं तव भवतु नामैवम् अखिलं
तथापि स्मर्तृणां वरद ! परमं मंगलम् असि (२५)

मनः प्रत्यक् चित्ते सविधम् अभिधायात्त मरुतः
प्रहृष्यतरोमाणः प्रमद सलिलोत् संगित दृशः।
यतदा लोक्या ह्लादं ह्रद इव निमज्जया मृतमये
दध त्यन्त स्तत्त्वं किं अपि यमिनस्तत् किल भवान् (२६)

त्वम् अर्क स्त्वं सोम स्तवम् असि पवन स्त्वं हुतवहः
स्त्वम् आप स्त्वं व्योम त्वमु धरणिर् आत्मा त्वमिति च
परि च्छिन्नमेवं त्वयि परिणता बिभ्रति गिरम्
न विद्मस्तत् तत्वं वयमिह तु यत् त्वं न भवसि (२७)

त्रयीं तिस्रो वृत्ती स्त्रिभुवनम् अथो त्रीन् अपि सुरान्
अकारौ वर्णे स्त्रिभिर् अभि दधत्तीर्ण विकृति
तुरीयं ते धाम ध्वनिभिर् अवरुन्धानम् अणुभिः
समस्त व्यस्तं त्वां शरणद ! गृणा त्योमिति पदम् (२८)

भवः शर्वो रुद्रः पशुपतिर् ऽथोग्रः सह महान्
तथा भीमेशानो इति यत् अभिधानाष्टकम् इदम्
अमुष्मिन् प्रत्येकं प्रविचरति देव श्रुतिर् अपि
प्रिया यास्मै धम्ने प्रणिहित नमस्योऽस्मि भवते (२९)

वपुष्प्रादु र्भावात् अनुमितम् इदं जन्मनि पुरा
पुरारे ! नैवाहं क्वचित् अपि भवन्नतं प्रणतवान्।
नमन् मुक्तः सम्प्र त्यतनुर् अहम अग्रे प्यनतिमान्
महेश ! क्षन्तव्यं तत् इदम् अपराध द्वयम अपि (३०)

नमो नेदिष्ठाय प्रियदव ! दविष्ठाय च नमो
नमः क्षोदिष्ठाय स्मर हर ! महिष्ठाय च नम।
नमो वर्षिष्ठाय त्रिनयन् यविष्ठाय च नमो
नमः सर्वस्मै ते तत् इदम् इति शर्वाय च नमः (३१)

बहल रजसे विश्वो त्पतो भवाय नमो नमः
प्रबल तमसे तत् संहारे हराय नमोनमः
जनसुख कृते सत्वो द्रिक्तौ मृडाय नमोनमः
प्रमहसि पदे निस्त्रैगुण्ये शिवाय नमोनमः (३२)

कृश परिणति चेतः क्लेश वश्यं क्वचेदम्
क्व च तव गुण सीमो ल्लंघिनी शश्वत् ऋद्धिः।
इति चकितम् अमन्दीकृत्य मां ाक्तिराधाद्
वरद ! चरण्योरस्ते वाक्य पुष्पोप-हारम (३३)

असितगिरिसमं स्यात्कज्जलं सिन्धु पात्रे
सुरतरुवरक्षाखा लेखनी पत्रमुर्वी।
लिखति यदि गृहीत्वा शारदा सर्वकालं
तदपि तव गुणानामीश पारं न याति (३४)

असुरसुरमुनीन्द्रैर र्चितस्येन्दुमौले
ग्रथितगुणमहिम्नो ज्ञानकारुण्यमूर्ते।
सकलगुण वरिष्टः स्तोत्रमेतत् चकार (३५)

अहरहनवधं धूर्जटे स्तोत्रमेत
त्पठति परमभक्त्या शुद्धचितः पुमान्येः।
स भवति शिवलोके रुद्र तुल्यस्तथाऽत्र
प्रचुरतरधनायुः पुत्रवान्कीर्तिमांश्च (३६)

दीक्षा दानं तपस्तीर्थ ज्ञानं यागादिका क्रिया
महिनस्तवपाटस्य कलां नांहन्ति षोडशीम् (३७)

मेहशान्नापरो देवो महिम्नो नापरा स्तुतिः
अघोरान्नापरो मन्त्रो नास्ति तत्वं गुरो परम् (३८)

कुसमदशननामा सर्वगन्धर्वराजः
शिशुधरवरमौले देदेवस्य दासः
स खलु निजमहिम्नो भ्रष्ट एवास्य रोषा-
त्स्तवनमिदमकार्षी द्दिव्यदिव्यं महिम्नः (३९)

सुखरमुनिपूज्यं स्वंग मोक्षैकहेतुं
पठति यदि मनुष्यः प्राञ्जलिर्नान्यचेता
व्रजति शिवसमीपं किन्नरैः स्तूयमानः
स्तवनमिदममोघं पुष्पदन्तप्रणीतम (४०)

श्री पुष्पदन्त मुख पंकज निर्गतेन
स्तोत्रेण किल्विष हरेण हर प्रियेण।
कण्ठस्थितेन पठितेन समाहितेन
सुप्रीणितो भवति भूत पतिर्महेशः (४१)

इत्येषा वाड्मयी पूजा श्रीमत्त्छकरपादयोः
अर्पिता तेन मे देवः प्रीयतां च सदाशिवः (४२)

ॐ नमः शम्भवाय च, मयोभवाय, च, नमः, शंकराय च,
मयस्करायच नमः शिवाय च शिवतराय च

◆◆◆

# शिवजी

ॐ त्र्यम्बकं यजामहे सुगन्धिं पुष्टि वर्धनम्।
उर्वा रुकम् इव बन्धनात्, मृत्यो मुक्षीय मामृतात्।।

१. चन्द्रशेखर चन्द्रशेखर चन्द्रशेखर पाहि मां
चन्द्रशेखर चन्द्रशेखर चन्द्रशेखर रक्ष माम्।।

♦♦♦

# शंकर अस्तुती (रुद्राष्टक स्तोत्र)

१. नमामी शमीशान निर्वाण रुपं,
विभुं व्यापकं ब्रह्म वेद स्वरुपं,
निजं निर्गुण निर्विकलपं निरीहं,
चिदाकाश माकाशवासं भजेऽहं।।

२. निराकार मोकार मूलं तुरीय,
गिरा ग्यान गोतीत मीशं गिरीहं,
करालं महाकाल कालं कृपालं,
गुणागार संसार पारं नतोऽहं।।

३. तुषाराद्रि संकोशगौरं गंभीरं,
मनो भूत कोटि प्रभा श्री शरीरं।
स्फुरन्मौलि कल्लोलिनी चारु गंगा,
लयद्भाल बालेन्दु कंटे भुजन्गा।।

४. चलत्कुण्डलं भ्रसुनेत्रं विशालं,
प्रसन्नाननं नीलकण्ठं दयालं,
मृगाधीश चर्माम्बरं मुण्डमालं,
प्रियं शंकरं सर्वनाथं भजामि।।

५. प्रचंडं प्रकष्टं प्रगल्भं परेशं,
अखण्डं अज भानु कोटि-प्रकाशं।
त्रयः शूल निर्मूलनं क्षुलापाणिं,
भजेऽहं भवानी पति भावगम्यं।।

६. कलातीत कल्याण कल्पान्तकारी,
सदा सज्जनानन्द दाता पुरारी
चिदान्द संदोह महोपहारी,
प्रसीद प्रसीद प्रभोमन्मथारी।।

७. न्यावत् उमानाथ पादारविन्दं,
भजंतीह लोके परेवानराणां,
नतावत् सुखं शान्ति सन्ताप नाशं,
प्रसीद प्रभो सर्व भूताधिवासं।।

८. न जानामि योगं जपं नैव पूजां,
नतोऽहं सदा सर्वदा शम्भू तुभ्यं।।
जरा जन्म दुःखो-धतात-प्यमानं,
प्रभो पाहि आसान्नमा मीश शम्भो।।

रुद्राष्टकमिदं प्रोक्तं विप्रेण हरतोषये,
ये पठन्ति नरा भक्त्या तेषां शम्भुः प्रसीदति।।

## क्षमा मन्त्र

ॐ त्र्यंबकं यजामहे सुगन्धिं पुष्टिवर्द्धनम्।
उर्वारुक मिव बन्धनान्मृत्योर्मुक्षीय मामृतात्।।

## अथ ध्यानम

१. गौरीश्वराय भुवनस्त्रयकारणाय
भक्तिप्रियाय भवभीतिभिदे भवाय।

शर्ववाय दुःखशमनाय वृषध्वजाय
रुद्राय कालदहनाय नमः शिवाय।।

२. करचरणकृतं वात्रकायजं कर्मज वा
श्रवणनयनजं वा मानसं वाऽपराधम्।
विदितमविहितं वा सर्वमेतत्क्षमस्व
जय जय करुणब्धे श्री महादेव शम्भो।।

३. आ किं न रक्षसि नयत्ययमन्तको मां
हेलावलेपसमयः किमयं महेश।
मा नाम भृत्करणया हृदयस्य पीड़ा
व्रीडापि नास्ति शरणागतमुज्झतस्ते।।

४. यदक्षर पदं भ्रष्ट मात्राहीनं चयद्भवेत
तत्सर्व क्षम्यतां देव प्रसीद परमेश्वर।।

♦♦♦

## मन्त्र

१. ॐ शर्वाय नम २. ॐ भवाय नमः
३. ॐ रुद्राय नमः ४. ॐ उग्राय नमः
५. ॐ भीमाय नमः ६. ॐ पशुपतये नमः
७. ॐ महादेवाय नमः ८. ॐ ईशानाय नमः

♦♦♦

## प्रभात आरती

१. शब्द ब्रह्य मयि स्वच्छे देवि त्रिपुर सुन्दरि !
यथा शक्ति जपं पूजा गृहाण परमेश्वरि !

## अर्थ

ही शब्द रूपी नयरमल स्वरूपी
ही दीवी ही त्रिपोर सोन्दरी
कर यथा शक्ती में चान्य पूजा
कर स्वीकार ही परमीश्वरी

२. नन्दन्तु साधकाः सर्वे विनश्यन्तु विदूषकाः
अवस्था शम्भवी मेस्तु प्रसन्नोऽस्तु गुरूः सदा

## अर्थ

रुज़्यतन सुखी माज सादक सारी,
यिम दोष्ट आसन तिम सेदितन
शिवरूप अवस्था मेति माज बन्यतन
गोर दीव सदा मेप्यठ प्रसन्न रूज़्यतन

३. दर्शनात् पापशमनी जपात मृत्यु विनाशिनी
पूजिता दुःख दौभाग्य हरा त्रिपुर सुन्दरी

## अर्थ

चानि दर्शन पाप सारी छि गलान्
चानि मृत्यू छु नाश सपदान
पूज़ायि किन्य चोन महिमा ग्यवन किन्य
ज़ीवस दो'ख त दअद दूर सपदान

४. नमामि यामिनीनाथ लेखा लङ्कृत कुन्तलाम
भवानी भवसन्ताप निर्वापण सुधानदीम

## अर्थ

नमस्कार छुस करान येमिस केशस मंज़ चे
चंन्दरम प्रज़लान रात्रो द्यन।
सम्सार दोखन छख न्यवारान चय
अमृत नदी हन्दि प्रवाह सत्य ज़न

५. मन्त्रहीनं क्रियाहीनं विधिहीनं च यदगतम्
त्वया तत्क्षम्यतां देवि कृपया परेश्वरी।।

## अर्थ

मन्त्रहीन आसिथ क्रियाहीन आसिथ
विधिहीन आसिथ यि केंछा प्रोवुम
तथ सारियसय ही परमेश्वरी चय
कृपायि किन्य आरतिस में माज बखशुम
आय शरण चे पादन विनयि किन छि नामिथय
व्याकुल तायि मन्ज़ असि रछत चय।

♦♦♦

## शांति पाठ

ॐ शंनो मित्रः शं वरुणः
शंनो भवर्त्वयमा
शंनो इन्द्रो बृहस्पतिः
शंनो विष्णुरुरुक्रमः
नमो ब्रह्मण नमो वायवे नमस्ते वायो
त्वमेव प्रत्यक्षं ब्रह्मासि त्वमेव प्रत्यक्षं ब्रह्म वदष्यामि,
ऋतं वदिष्यामि सत्यं वदिष्यामि तन्मामवतु

तद्वक्तार भवऽतु अवतु मामऽवतु वक्तारं शान्तिः शान्तिः शान्तिः,

सह ना अवतु, सह नौ भुनक्तु

सहवीर्यकरवावहै, तेजस्विना अधित मस्तु मा विद्वषावहै

शान्तिः शान्तिः शान्तिः

असतो मा सद्गमय, तमसो मा ज्योतिर्गमय, मृत्योममित गमय

ॐ पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते पूर्णस्य पूणमादाय पूणमेवावशिष्यते।

राज्य सोथ प्रजा सोस्त्ये
दीश सोस्तये तथ्य वचे
यजमान ग्रेह स्वस्थे
सोहत्य गो ब्रह्मन्यंस्यच
हा कृष्ण द्वारिका वासी
कवसी यादव नन्द नये
इमाम अवस्ताम सम प्राप्तम
अनाथम किं न रखसे
हा कृष्ण मनसा वासी
कासी यादव नन्द नये
इमाम अवस्ताम सम प्राप्तम
अनाथम किं न रखय्से
र्सवे भवनतु सुखिना
र्सवे संतु निरा मया
र्सवे भदरानि पशन्यतो
महा कश्चित दुखभाजयत

◆◆◆

अब दोनों हाथों में फूल लिए हुए प्रणाम करते हुए पढ़ें।

आपान्नोस्मि शरण्योसु सर्वावस्थातु सर्वदा
भगवन त्वां प्रपन्नोस्मि रक्ष मां शरंणागतम्
उभाभ्यां जानुभ्यां पाणिभ्यां शिरसा
वचसा चोरसा मनसा च नमस्कारं करोमि नः

तर्पणः सीधा हाथ रखते हुए पढ़ें।

नमो ब्रह्मणै, नमो अरस्त्वग्नये, नमः पृथिव्यै, नमः औषधिभ्यः नमो वाचे, नमो वाचस्पतये, नमो विष्णवे बृहते कृणोमि इत्येतासाम् एव देवतानां सा रि ष्टिं सायुज्यं सलोकतां सामीप्यम आप्नोति य एवं विद्यान् स्वाध्यायाम् अधीते।

ॐ शान्तिः शान्तिः शान्तिः

♦♦♦

मार्भमन्दमनो चिचिन्त्य बहुधा यामिश्वरं यातना।
नामीन प्रभविन्त पापरिश्वः स्वामीननु श्रीधराः।।
आलस्यं व्यीपनीय भक्ति सुलभंध्यायस्य नारायणं।
लोकस्य व्यसन पनोदन करो दासस्य किं न क्षमः।।
पूजितोऽसि मया भक्तया भगवन्कमलापते स लक्ष्मी को
मनस्यान्तर्विश्वविियन्ति हेतवे।।
औं चंदन च महापुण्यं पवित्रं पापनाशनम
आपदा हरंते नित्यं लक्ष्मी भवतु सम्पदा
हरि ॐ तत् सत्।।

ॐ शान्तिः शान्तिः शान्तिः

यदक्षरं पदं भ्रष्टं मात्राहीनं च यद्भवेत्।
तस्सर्व क्षम्यतां देव प्रसीद परमेश्वर।।
आहवानं नैव जानामि नैव जानामि पूजनम।
पूजाभागं न जानामि क्षम्यतां परमेश्वरि।।

♦♦♦

## कुछ सर्वकामनासिद्ध मंत्र

१. सर्व मंगल मंगल्ये, शिवे सर्वार्ध साधके।
शरण्ये त्र्यम्बके, गौरि नारायणि नमोस्तुते।।
२. सर्वस्वरूपे सर्वेशे सर्वशक्ति समन्विते।
भयेभ्यस्त्राहि नो देवि। दुर्ग देवि नमोस्तुते।।
३. देहि सौभाग्यमरोग्यं देहि द्विषोजहि।।
४. सर्वाबाधाप्रशमनं त्रैलोक्यस्या खिलेश्वरि।
एवमेव त्वया कार्यमस्मद्वरिविनाशनम।।
५. स्तुता सुरैः पूर्वमभीष्टसंश्रया तथा सुरेन्द्रेणदिनेषु सेविता
६. करोतु सा नः शुभहेतुरीश्ररी शुभानि भद्राण्यभिहन्तु चापदः
७. अचिन्त्य रूपचरिते सर्वशत्रुविनाशनि।
रूपं देहि जय देहि यशो देहि द्विषोजहि
८. ॐ निर्गुणे। निष्कले। नित्ये। सच्चिदानन्द रूपिणि।

नमोस्तुते महाराज्ञि पहिमाम शरणागतम ।।

श्री शारिका सदा भगवते, भवतु प्रसन्नसा

९.रोगान अशेषान अपहंसि तुष्टा रुष्टा तु

कामान् सकलान् अभीष्टान्

त्वाम आश्रितानां न विपत नराणाम त्वमा

आश्रिता ह्याश्रयतां प्रयान्ति।

१०.सर्बाधा विविर्मुक्तो धनधनान्य समन्वितः

मनुष्यो मत्प्रसादेन भविष्यति न संशयः

११.शरणागत दीनार्त परित्राण परायणे

सर्वस्यार्ति हरे देवि नारायणि नमोस्तुते

१२.जयन्ती मण्घला काली भद्रकाली कपालिनी

दुर्गा क्षमा शिवा धात्री स्वाहा स्वधा नमोऽस्तुते।।

१३.शूलेन पाहि नो देवि पाहि खडगेन चाम्बिके

घण्टास्वनेन नः पाहि चापज्यानिः स्वनेन च।।

१४.या श्री स्वयं सुकृतिनां भवनेष्वलक्ष्मी

पापात्मनां कृतधियां हृदयेषु बुद्धि।।

श्रद्धा सतां कुलजनप्रभवस्य लज्जा

तां त्वां नताः स्मः परिपालय देवि विश्वम्।।

♦♦♦

# हे माता

१. भक्तनुग्रहकारिणी भगवती देवाधिदेवेश्वरी
दीनानाथकृपावती स्वजननी भक्तानुरक्ता सती।
ॐ काराक्षरवासिनी सुरनुता सर्वेश्वरी सर्वदा
भूयान्नो वरदा सदा ह्यभयदा कामेश्वरी कामदा।।

२. वराङ्कुशै पाशमभीतिमुद्रां
करैवहिन्तीं कमालासनस्थाम्।
बालार्ककोटि प्रतिमां त्रिनेत्रां
भजेहमाधयां भुवनेश्वरीं ताम्।।

३. माता भवानी च पिता भवानी
बन्धुर्भवानी च गुरू भवानी।
विधा भवानी द्रविणं भवानी
यतो यतो यामि ततो भवानी।।
निर्गुणे निष्क्रये नित्ये सच्चिदानन्दरूपिनी।
नमोस्तु ते महाराज्ञि पाहि मां शरणागतम्।।

♦♦♦

# ॐ ध्यानम

१. ॐ कालाभ्रामां कटाक्षैरिकुलभयदां मौलिबद्धेन्दुरेखां
शङ्खचक्रं कृपाणंत्रिशिखमपि करैरुद्वहन्तीं त्रिनेत्राम्।
सिंहस्कन्धाधिरूढा त्रिभुवनखिलं तेजसा पूरयन्तीं
ध्यायेद् दुर्गा जयाख्यां त्रिदशपरिवृतां
सेवितां सिद्धिकामैः।।

२. ये देवि! दुधर्र कृतान्त मुखान्तरस्था
ये कालि कालधन पाश नितान्त बद्धा
ये चण्डि। चण्ड गुरू कलमष सिन्धुमग्ना
स्तान् पासि मोचयसि तारयसि स्मृतवै।।

३. देवि प्रपन्नार्तिहरे प्रसीद
प्रसीद मातर्जगतोऽखिलस्य।
प्रसीद विश्वेश्वरि पाहि विश्वं
त्वमीश्वरी देवि चराचरस्य।।

४. यस्याः प्रभावमतुलं भगवानन्तो
ब्रह्मा हरश्च नहि वक्तुमलं बलं च
स चण्डिकाखिलजगत्परिपालनाय
नाशाय चाशुभमयस्य मतिं करोतु

♦♦♦

## महा गायत्री मंत्र

ॐ भूर्भवः स्वः तत्सवितु वरेण्यं
भर्गोदेवस्य धीमहि, धियो योनः प्रचोदयात् ॐ

५. मुक्ता - विद्रुम - हेम - नील - धवल, छाये - मूर्खैः
- त्रीक्षणैः युक्ताम् - इन्दु - निबाद्ध - रत्न - मुकटां,
तत्वात्म - वर्णात्मि - काम्।
शंख चक्रम - अथार - बिन्दु - युगलं हस्तै - वर्हन्तीं भजे।
आगच्छ वरदे देवि त्र्यक्षरे ब्रह्मवादिनि, गायत्रि छन्दसां
- मात - ब्रह्म - योने नमोस्तुते।
या कुन्देन्दुतुषारहारधवला या श्वेतपद्मासना।

या वीणावर - दण्डमण्डितकरा या शुभ्रवस्त्रान्विता।
या ब्रह्माच्युतशङ्कर प्रभृतिभिर्देवैः सदा वन्दिता।
सामां पातु सरस्वती भगवती निःशेषजाड्यापहा।
भक्तानां सिद्धिर्कर्त्री सकलमुनिजनै सेविता या भवानी।
नौम्यहं नौम्यहं त्वां हरिहरप्रणतां शरिकां नौमि नौमि।

६. दुर्गा त्वां च सरस्वती भगवती ज्वालामुखीं शारदां।
राज्ञीं शरिकया युतामधहरी त्वां भद्रकाली शिवाम्
वागीशीं त्रिपुरां भजामि समयां पीठेश्वरी सिद्धिदां
गायत्रीं कमलासननस्य वनितां श्रीकुब्जिकां कालिकाम्।।

६. सिंहस्था शशिशेखरा मरकत प्रख्यै चतुर्भिभुजै।
शङ्खचक्र धनुःशरांश्च दधती नेत्रैस्त्रिभि शोभिता।
आमुक्ताङ्गदहारकङ्कणरणत्का-ञ्चीरणन्नूपुरा
दुर्गा दुर्गतिहारिणी भवतुनो रत्नोल्लसत्कुण्डला।।

♦♦♦

## महा राज्ञा स्तोत्र

या द्वादशार्क परिमण्डित मुर्तिरेका
सिंहा सनस्थितिमतीमुरगैर्वृतां च
देवी मनक्षगतिमीश्वरतां प्रपन्नां
तां नौमि भार्गवपुषीं परमार्थराज्ञीम्।।

उद्यद्दिवा कर सहस्त्ररुचिं त्रिनेत्रां
सिंहासनोपरि गतामुरगोपवीताम्।
खड्गाम्बुजाढ्यकलशामृतपात्रहस्तां
राज्ञीं भजामि विकसद्वदनारविन्दाम्।।

यत्पादपङ्कजतलेऽमरमूर्धमौलि
न्यसतेन्द्रनीलमणिसन्ततयः पतन्ति ।।
किञ्जल्कपानरतमुग्धमधव्रतत्वं
राज्ञीं सदा भगवती जननीव नोऽव्यात्
पत्तिद्युलोकपतिवैभवमाददाति
देवाधिपोऽपि ननु पत्त्यनुकारमेति
यत्प्रोल्लसत्त्रयनयोगवियोगभवाद्
राज्ञीं महोपपदरम्यतरां नमामि ।।
शीतांशुबालार्ककृशानुनेत्रां
चतुर्भुजामेनत्वदासनस्थाम् ।
शङ्खाब्जशूलासिधरां महेशीं
राज्ञीं भजेहं तुहिनाद्रिरूपाम् ।
स्मृतैवान्तर्गतं पुंसां हरन्ती सकलं मलम् ।
ज्यत्येषा महाराज्ञी भक्तानां कामदायिनी ।
त्रिजगन्मोहिनि ईड्ये मिहिरीभूतसद्गुणे ।
नमोस्तु ते महाराज्ञि पाहि मां शरणागतम् ।
शेषाशेषमुखागण्यगुणे गुणगणप्रिये ।
नमोस्तु ते महाराज्ञि० ।
सुरासुरनरसिद्धवन्दनीय पदाम्बुजे ।
नमोस्तु ते महाराज्ञि० ।
चराचरजगत्सृष्टिस्थितिसंहारकारिणि ।
नमोस्तु ते महाराज्ञि० ।
भक्तकल्पलत्तेऽनल्पवाङ् माधुर्यजितामृते ।
नमोस्तु ते महाराज्ञि० ।

ब्रह्मविष्णुमहेशानवन्दिते गिरिनन्दिनि।
नमोस्तु ते महाराज्ञि०।
भक्तानां भीमसंसारपारावारप्रतारिणि।
नमोस्तु ते महाराज्ञि०।
निगुर्णे निष्क्रिये नित्ये सच्चिदानन्दरूपिणि।
नमोस्तु ते महाराज्ञि०।
राज्ञीस्तोत्रमिदं पुण्यं त्रिसन्ध्यं प्रयतः पठेत्।
असंशयमशेषैण वशयेदखिलं जगत्।

◆◆◆

बीजैः सप्तभिरुज्जवलाकृतिरसौ या सप्तसप्तिद्युतिः
सप्तर्षिप्रणताङ्–घ्रि पङ्कजयुगा या सप्तलोकार्तिहृत्
काश्मीरप्रवरेशमध्यनगरेप्रद्युन्मपीठे स्थिता
देवीसप्तकसंयुता भगवती श्रीशारिका पातु नः।।

## श्री राजराजेश्वरी स्तुतिः

## ॐ नमो भवान्ये

१. ॐ छन्दः पादयुगा निरुक्तसुमुखा शिक्षा च जंघायुगा
ऋग्वेदोरुयुगा युजुः सुजघना या सामवेदोदरा।
तर्कन्यायकुचा श्रतिस्मृतियुक काव्यादिवेदानना।
वेदान्तामृतलोचना भगवती श्रीराजराजेश्वरी।।

२. ईशाधीश्वरयोगिवृन्दविधृता स्वानन्दभूता परा
पश्यन्तीत्यनु मध्यमा विलसती श्रीवैखरीरूपिणी।
आत्मानात्मविचारिणी त्रिनयना विद्यावती भारती
श्रीचक्र प्रियबिन्दुतर्पणपरा श्रीराजराजेश्वरी।।

३. कल्याणायुत पूर्णबिम्बवदना पूर्णेश्वरी नन्दिनी
पूर्णा पूर्णतरा परेशमहिषी पूर्णा मृतास्वादिनी।
सम्पूर्णा परमोतामृतकला ·विद्यावती भारती।
श्री चक्र प्रियबिन्दुतर्पणपरा श्रीराजराजेश्वरी।।

४. एकाकारमनेकवर्ण विविधाकारैकचिद्रपिणौ
चैतन्यात्मकएकचक्ररचिता चक्रांगएकाकिनी।
भावाभावविभाविनी भयहरा सद्भक्तचिन्तामणिः
श्रीचक्रप्रियबिन्दुतर्पणपरा श्रीराजराजेश्वरी।।

५. लक्ष्यालक्ष्यनिरीक्षणा निरूपमा रुद्राक्षमालाधरा
साक्षात्कारणदक्षवंशकलिता दीर्घातिदीर्घेश्वरी।
भद्रा भद्रवरप्रदा भगवती भद्रेश्वरी भद्रदा।
श्री चक्रप्रियबिन्दुतर्पणपरा श्रीराजराजेश्वरी।।

६. ह्रीं बीजानलनाद बिन्दुभरता सत्कार (ओंकार) नादात्मिका
ब्रह्मानन्दघनोदरी गुणवती ज्ञानेश्वरी ज्ञानदा,
इच्छा ज्ञानक्रियावती जितवती गंधर्वसंसेविता।
श्री चक्रप्रियबिन्दुतर्पणपरा श्री राजराजेश्वरी।।

७. हर्षोन्मत्तसुवर्ण पात्रभरिता पार्श्वोन्नता घुर्णिता
हकारप्रियशब्दब्रह्म (राशि) निरता स्वारस्वतोल्लासिनी,
सारासारविचारचारूचरिता वर्णाश्रमा कारिणी
श्री चक्रप्रियबिन्दु तर्पणपरा श्री राजराजेश्वरी।।

८. सर्वज्ञानकलावती सकरूणा सन्नादिनी नन्दिनी,
सर्वान्तर्गतशालनी शिवतनूसन्दीपिनी दीपिनी,
संयोगप्रियरूपिणी प्रियवती प्रीता प्रतापोन्नता

श्री चक्रप्रियबिन्दु तर्पणपरा श्री राजराजेश्वरी।।

९. कर्माकर्मविवर्जिता कुलवती कर्मप्रदा कौलिनी,
कारुण्यावधि सर्वकर्मनिरतासिन्धुप्रिया शालिनी,
पूर्णब्रह्मसनातनान्तरगता ज्ञेया स्वयोगात्मिका,
श्री चक्रप्रियबिन्दु तर्पणपरा श्री राजजारेश्वरी।।

१०. हस्तिकुम्भसध्कूपयोधरावरा पीनोन्नता नमग्रा
हाराद्याभरणा सुरेन्द्र विनुता श्रङ्गारटपीठालया,
योन्याकार कयोनिमुद्रितकरा नित्यं सुर्वणात्मिका।।
श्री चक्रप्रियबिदु तर्पणपरा श्री राजराजेश्वरी।।

११. लक्ष्मीलक्षपूर्णकुम्भरवदा लीला विनोदस्थिता,
लाक्षारञ्जित पद्मपादयुगला ब्रह्माण्डसंसेविता,
लोकालोकित लोककामजयिनी लोकाश्रयाङ्काश्रया
श्रीचक्रप्रियबिन्दु तर्पणपरा श्री राजराजेश्वरी।।

१२. ह्रीं काराङ्कितशङ्कर प्रियतनुः श्री योगपीठश्वरी,
माङ्गल्यायुतपङ्कजा भनयना माङ्गल्यसिद्धिप्रदा।
तारुण्यात्तपसार्चिता तरुणिका तन्त्रोपमातन्विता
श्री चक्रप्रियबिन्दु तर्पणपरा श्री राजराजेश्वरी।।

१३. सर्वेशाङ्गविहारिणी सकरुणा सर्वेश्वरी सर्वगा
सत्या सर्वमयी सहस्रदलगा सप्तार्णवोपस्थिता
सङ्गासङ्गविवर्जिता सुखकारी बालार्ककोटिप्रभा
श्री चक्रप्रियबिन्दु तर्पणपरा श्री राजराजेश्वरी।।

१४. लक्ष्मीशादिविरञ्च चक्रमुकुटा द्यष्टाङ्गपीठार्चिता,
सूर्येन्द्वग्निमयैकपीठनिलया चिन्मात्रकौलेश्वरी।
गोप्त्री गुर्विणिगर्विता गगनगा गङ्गा गणेशप्रिया
श्री चक्रप्रियबिन्दु तर्पणपरा श्री राजराजेश्वरी।।

१५. कादिक्षान्तसुर्वणबिन्दु सुतनुः स्वर्णादिसिंहासना,
नानारत्नविचित्र चित्ररचिता चातुर्यचिन्तामणिः
चित्तानन्द विद्यायिनी सुविपुला कोटित्रयीश्याम्बिका
श्री चक्रप्रियबिन्दु तर्पणपरा श्री राजराजेश्वरी।।

१६. ह्रींकारत्रयरूपिणी समयिनी संसारिणी हंसिनी,
वामाचारपरायणा सुमुकुटा बीजावती मुद्रिणी।
कामाक्षी करुणाविचित्ररचिता श्री श्री त्रिमूर्त्यात्मिका
श्री चक्रप्रियबिन्दु तर्पणपरा श्री राजराजेश्वरी।।

१७. सा बिम्बप्रति बिम्बलम्बित लसत् बिम्बाधरा याम्बिका
जम्बीरोत्पलकर्ण शोभितमुखा जम्बूफल श्री कुचा।
नानारत्नकिरीट दीप्तिलसिता प्रत्यक्षदीक्षात्मिका
श्री चक्रप्रियबिन्दु तर्पणपरा श्री राजराजेश्वरी।।

१८. यत्तोजो निधिभिस्त्वनन्त् घृणिभिर्नोपाहयृते प्रेरितुं,
हार्दं ध्वान्तमपास्य सिक्षणंपि तद्ध्यान मात्रा दृशा।
यत्सद्भादनुभाति सर्वमुदितं भानुं यथा पद्मनी।।
प्रत्यग्दाम नमाम तत्तव वपुः।। श्री राजराजेश्वरी।
श्री चक्रप्रियबिन्दु तर्पणपरा श्री राजराजेश्वरी।।

◆◆◆

# भगवती पोश पूजा

जय भगवती विन्ध्यवासिनि कैलासवासिनी श्मशानवासिनि हुङ्कारिणि कालायनि कात्यायनि हिमगिरितनये कुमारमातः गोविन्दभगिनि शितिकण्ठकण्ठाभरणे अष्टादशभुजे भुजङ्गवलयवमण्डिते केयूरहाराभरणेअष्टादशभुजे भुज ववय नण्डिते केयूर हाराभरणोऽजेयखडगत्रिशूलडम-रूमुद्गरच-षककलशशर चापवराऽभयपाश-पुस्तककपालखट्वाङ्ग- गदामुसुलतोमरचक्रहस्ते कृपापरे प्रभूत विविधयुधे चण्डिके चण्डघटे किरातवेशे ब्रह्माणि रुद्राणि नारायणि ब्रह्माचारिणि दिव्यतापोविधायिनि वेदमातः गायत्रि सावित्रि सरस्वति सर्वाधारे सर्वेश्वरि विश्वेश्वरि विश्वकर्त्रि समाधिविश्रान्तिमये चिन्मये चिन्तामणिस्वरूष कैवल्ये शिवे निराश्रये निरुपाधिमये निरामयपदे ब्रह्मविष्णुमहेश्वरनमिते मोहिनि तोषिणि भरकरनाशिनि दितिसुतप्रमथिनि काले कालकिरमथिनि कालाग्निशिखे कालरात्रि अजे नित्ये सिंहस्थे योगरते योगेश्वरनमिते भक्तजनवत्सले सुरप्रियकारिणि दुर्गे दुर्जये हिरण्ये शरण्ये कुरु मां दयाम्।। प्रद्युमन्शिखरासीनां मातृचक्रोपशोभिताम्। पीटेश्वरीं शिलारूपां शरिकां प्रणमाम्यहम्।। अमा माऽवतु कामा च चाइङ्गी टङ्कधारिणो। तारा च पार्वती चैव यक्षिणी शरिकाष्टमी।।

♦♦♦

ॐ शान्तिः शान्तिः शान्तिः

# लीला

चराचर छुख परमेश्वरो
रछतम पनन्यन पादन तल

१. गज़ मुखत्र बाल. चन्द्र लम्बोदरो, वेनायको भ'विनय जय
हरमुख दर्शुन दितम ईश्वरो ..... रछतम०

२. निष्कल नाव चोन निरंजनो सो, य कल धा'रित त्रिकारण
स्मरणि चाञि सति जन्म मृत हरो ...... रछतम०

३. देवियि त. देवता सा'रिय स'मित
न'मित छिय क़रान चाञि स्मरण
स्मरणि चाञि सति सा'र्य पाप हरो ..... रछतम०

◆◆◆

१. गो,डञ गणपत जियस कुन कर नमस्कार।
पतह रठ राजर्यञि हुंद खास दरबार।।

२. व'नित क्या ह्यक. ब. देवि चा'ञ लीला।
करै वोन्य मूर्खगियि किञ मूर्ख. खेला।।

३. च. माता शारिका संतुष्ट म्य' प्यठ रोज़।
गदा आमुत बदर्गाह छुस सदा बोज़।।

४. वहा'रित ज़ाल संसारन वो,लुम नाल।
करुम वो,ञ चार. नत. क्या म्योन छुय हाल।।

५. मदन लोभन मोहन क'रम.च छनम जाय।
कृपाये किञ करुम मो,कलावनुक पाय।।

६. अहंकारन स्यठाह ह्यो,तमुत छुनस तल।

षडाधारावर्तैरपरिमितमन्त्रोर्मिपटलै-
श्चलन्मुद्राफेनैर्बहुविधलसद्दैवतझषैः।
क्रमस्त्रोतोभिस्त्वं वहसि परनादामृतनदीं
भवानि ! प्रत्यग्रा शिवचिदमृताब्धिप्रणयिनी।।१४।।

महीपाथोवह्नि नश्वसनवियदात्मेन्दु रविभि-
र्वपुर्भिर्ग्रस्तांशैरपि तव कियानम्ब ! महिमा।
अमून्यालोक्यन्ते भगवति ! न कुत्राप्यणुतरा-
मवस्थां प्राप्तानि त्वयि तु परमव्योमवपुषि।।१५।।

मनुष्यास्तिर्यञ्चो मरुत इति लोकत्रयमिदं
भवाम्भोधौमग्नं त्रिगुणलहरीकोटिलुठितम्।
कटाक्षश्चेदत्र क्वचन तव मातः ! करुणया
शरीरी सद्योऽयं ब्रजति परमानन्दतनुताम्।।१६।।

कलां प्रज्ञामाद्यां समयमनुभूतिं समरसां
गुरुं पारम्पर्यं विनयमुपदेशं शिवकथाम्।
प्रमाणं निर्वाणं परममतिभूतिं परगुहां
विधिं विद्यामाहुः सकलजननीमेव मनुयः।।१७।।

प्रलीने शब्दौघे तदनु विरते बिन्दुविभवे
ततस्तत्त्वे चाष्टध्वनिभिरनुपाधिन्युपरते।
श्रिते शाक्ते पर्वण्यनुकलितचिन्मात्र गहनां
स्वसंवित्तिं योगी रसयति शिवाख्यां परतनुम्।।१८।।

परानन्दाकारां निरवधिशिवैश्वर्यवपुषं
निराकारज्ञान प्रकृतिमनवच्छिन्नकरुणाम्।
सवित्रीं भूतानां रितिशयधामास्पदपदां
भवो वा मोक्षो वा भवतु भवतीमेव भजताम्।।१९।।

जगत्काये कृत्वा तमपि हृदये तच्च पुरुषो
पुमांसं बिन्दुस्थं तमपि परनादाख्यगहने।
तदेतज्ज्ञानाख्ये तदपि परमानन्दविभवे
महाव्योमाकारे ! त्वदनुभवशीलो विजयते।।२०।।

विधे विधे वेद्ये विविधसमये वेदजननि।
विचित्रे ! विश्वाद्ये ! विनयसुलभे वेदगुलके
शिवाज्ञे शीलस्थे ! शिवपदवदान्ये ! शिवनिधे !
शिवे मातर्मह्यं त्वयि वितर भक्तिं निरुपमाम्।।२१।।

विधेर्मुण्डं हृत्वा यदकुरुत पात्रं करतले
हरिं शूलप्रोतं यदऽगमयदंसाभरणताम्।
अलंचक्रे कण्ठं यदपि गरलेनाम्ब ! गिरिशः
शिवस्थायाः शक्तेस्तदिदमखिलं ते विलसितम्।।२२।।

विरिञ्च्याख्या मातः ! सृजसि हरिसंज्ञा त्वमवसि
त्रिलोकीं रुद्राख्या हरसि विदधासीश्वरदशम्।
भवन्ती सादाख्या शिवयसि च पाशौघदलिनी
त्वमेवैकाऽनेका भवसि कृतभेदैर्गिरिसुते ! ।।२३।।

मुनीनां चेतोभिः प्रमृदितकषायैरपि मनाग्
अशक्ये सुंस्प्रष्टुं चकितचकितैरम्ब ! सततम्।
श्रुतीनां मूर्धानः प्रकृतिकठिनाः कामलतरे
कथं ते विन्दन्ते पदकिसलये पार्वति ! पदम्।।२४।।

तडिद्वल्लीं नित्याममृत सरितं पाररहितां
मलोत्तीर्णां ज्योत्स्नां प्रकृतिमगुणग्रन्थिगहनाम्।
गिरां दूरां विद्यामविनतकुचां विश्वजननी-
मपर्यन्तां लक्ष्मीमभिदधति सन्तो भगवतीम्।।२५।।

शरीरं क्षित्यभ्भः प्रभृतिरचितं केवलमिदं
सुखं दुःखं चायं कलयति पुमांश्चैतन इति।
स्फुटं जानानोऽपि प्रभवति न देहि रहयितुं
शरीराहंकारं तव समयबाह्र् यो गिरिसुते ! ।।२६।।

पिता माता भ्राता सुहृदऽनुचरः सझम गृहिणी
वपुः पुत्रो मित्रं धनमपि यदा मां विजहति।
तदा मे भिन्दाना सपदि भयमोहान्धतमसं
महाज्योत्सने ! मातर्भव करुणया सन्निधिकरी।।२७।।

सुता दक्षस्यादौ किल सकलमातस्त्वमुदभूः
सदोषं तं हित्वा तदनु गिरिराजस्य तनया।
अनाद्यन्तां शम्भोरपृथगपि शक्तिर्भगवती
विवाहाज्जायतीत्यहह चतिरं वेत्ति तव कः।।२८।।

कणास्त्वद्दीप्तीनां रविशशिकृशनुप्रभृतयः
परं ब्रह्म क्षुद्रं तव नियतमाऽनन्दकणिका।
शिवादिक्षित्यन्तं त्रिवलयतनोः सर्वमुदरे
तवास्ते भक्तस्य स्फुरसि हृदि चित्रं भगवति।।२६।।

त्वया यो जानीते रचयति भवत्यैव सततं
त्वयैवेच्छत्यम्ब ! त्वमसि निखिला यस्य तनवः।
गतः साम्यं शम्भुर्वहति परमं व्योम भवती
तथाप्येवं हित्वा विहरति शिवस्येति किमिदम्।।३०।।

पुरः पश्चादन्तर्बहिरपरिमेयं परिमितं
परं स्थूलं सूक्ष्मं सकुलमकुलंगुह्र यमगुहम्।
दवीयो नेदीयः सदसदिति विश्वं भगवतीं
सदा पश्यन्त्याज्ञां वहसि भुवनक्षोभजननीम्।।३१।।

मयूखाः पूष्णीव ज्वलन इव तद्दीप्तिकणिकाः
पयोधौ कल्लोलप्रतिहरमहिम्नीव पृषतः।
उदेत्योदेत्याम्ब ! त्वयि सह निजैस्तात्त्विककुलै-
र्भजन्ते तत्त्वौधाः प्रशममनुकल्पं परवशाः।।३२।।

विधुर्विष्णुब्रह्‌ माप्रकृतिरणुरात्मादिनकरः
स्वभावो जैनेन्द्रः सुगतमुनिराकाशमनिलः।
शिवः शक्तिश्चेति श्रु तिविषयतां तामुपगतां
विकल्पैरेभिस्त्वामऽभिदधति सन्तो भगवतीम्।।३३।।

प्रविश्य स्वं मार्गं सहजदयया देशिकदृशा
षडध्वध्वान्तौघच्छिदुरगणनातीतकरुणाम्।
परानन्दाकारं सपदि शिवयन्तीमपि तनुं
स्वमात्मानं धन्याश्चिरमुपलभन्ते भगवतीम्।।३४।।

शिवस्त्वं शक्तिस्त्वं त्वमसि समया त्वं समयिनी
त्वमात्मा त्वं दीक्षा त्वमयमणिमादिर्गुणगणः।
अविद्या त्वं विद्या त्वमसि निखलं त्वं किमपरं
पृथक्तत्त्वं त्वत्तो भगवति न वीक्षामह इमे।।३५।।

असंख्यै प्राचीनैर्जननि जननैः कर्मविलया-
दगते जन्मन्यन्त गुरुवपुषमासाद्य गिरिशम्।
अवाप्याज्ञां शैवीं क्रमतनुरपि त्वां विदितवा-
न्नेययं त्वत्पूजास्तुतिविरचनेनैवदिवसान।।३६।।

यत्षट्पत्रं कमलमुदितं तस्य या कर्णिकाख्या
योनिस्तस्या प्रथितमुदरे यत्तदोङ्कारपीठम्।
तस्मिन्नऽन्तः कुचभरनतां कुण्डलीतः प्रवृत्तां
श्यामाकारां सकलजननीं सन्ततं भावयामि।।३७।।

भुवि पयसि कृशानौ मारुते खे शशाङ्के
सवितरि यजमानेऽप्यष्टधा शक्तिरेका।
वहति कुचभराभ्यां या विनम्रापि विश्वं
सकलजननि ! सा त्वं पाहि मामित्यवश्यम्।।३८।।

इति श्रीद्धर्माचार्यविरचितायां
पञ्चस्तव्यां
पञ्चमः सकलजननीस्तवः समाप्तः

♦♦♦

# श्री स्वामी विद्याधर कृत राज्ञास्तोत्र

।।ॐ नमः श्री जगदम्बायै।।

ॐ विश्वेश्वरी निखिलदेव महर्षिपूज्या
सिंहासना त्रिनयना भुजगोपवीता।
शङ्खाम्बुजास्यऽमृत कुम्भक पञ्चशाखा
राज्ञी सदा भगवती भवतु प्रसन्ना।।१।।

जन्माटवी प्रदहने दव वहिन-भूता
तत्पाद पंकज रजोगत चेतसां या।
श्रेयोव्रतां सुकृतिनां भवपाशभेत्री
राज्ञी सदा भगवती भवतु प्रसन्ना।।२।।

देव्या यया दनुजराक्षसदुष्ट-चेतो
न्यग्भावितं चरणनूपुरशिञ्जितेन।
इन्द्रादि द्रवे हृदयं प्रविकासयन्ती
राज्ञी सदा भगवती भवतु प्रसन्ना।।३।।

दुःखार्णवे हि पतितं शरणागतं या
चोद्धृत्य सा नयति द्याम परं दयाब्धि।
विष्णुगजेन्द्रमिव भीत भयपहर्त्री
राज्ञी सदा भगवती भवतु प्रसन्ना।।४।।

यस्या विचित्रमखिलं हि जगत्प्रपञ्चम्
कुक्षौ विलीनमपि सृष्टि विसृष्टि रूपात्।
आविर्भवत्यविरतं चिदचित्सवभावम्
राज्ञी सदा भवगती भवतु प्रसन्ना।।५।।

यत्पाद पङ्कजरजः कणज प्रसादात्
योगीश्वरैर्विगत कल्मषमानसैस्तत्
प्राप्तं पदं जनिविनाशहरं परं सा
राज्ञी सदा भगवती भवतु प्रसन्ना।।६।।

यत्पादपङ्कज रजांसि मनोमलानि
संमार्जयन्ति शिवविष्णु विरिञ्चदेवैः।
मृग्यान्यऽपश्चिमतनों प्रणुतानि माता
राज्ञाी सदा भगवती भवतु प्रसन्ना।।७।।

यत्पाद चिन्तन दिवाकर रश्मिमाला
चान्तर्बहिष्करणवर्ग सरोजषण्डम्।
ज्ञानोदये सति विकास्य तमोपहर्त्री
राज्ञी सदा भगवती भवतु प्रसन्ना।।८।।

यददर्शना मृतनदी महदोघयुक्ता
संप्लावयत्यखिल भेदगुहास्वऽनन्ता।
तृष्णाहरा सुकृतिनां भवतापहर्त्री
राज्ञी सदा भगवती भवतु प्रसन्ना।।९।।

हसंस्थिता सकलशब्दमयी भवानी
वाग्वादिनी हृदय पुष्कर चारिणीया।
हंसीव हंसरजनीश्वर वह्निनेत्रा
राज्ञी सदा भगवती भवतु प्रसन्ना।।१०।।

या सोमसूर्यवपुषा सततं सरन्ती
मूलाश्रयातडिदिवाऽऽविधिरन्ध्रमीढया।
मध्यस्थिता सकलनाडिसमूहपूर्णो
राज्ञी सदा भगवती भवतु प्रसन्ना।।११।।

चैतन्यपूरित समस्त जगद्विचित्रा
मातृप्रमेय परिमाणतया चकास्ति।
या पूर्णवृत्यहमिति स्वपदाधिरूढा
राज्ञी सदा भगवती भवतु प्रसन्ना।।१२।।

या चित्क्रमाक्रमतया प्रविभातिनित्या
स्वातन्त्र्यशक्तिरमला गतभेदभावा।
स्वात्मस्वरूपसुविमर्शपरैः सुगम्या
राज्ञी सदा भगवती भवतु प्रसन्नी।।१३।।
या कृत्यपञ्चक निभालन लालसैस्तैः

सन्दृश्यते निखिलवेद्यगतापि शश्वत्।
सान्तर्धृता परप्रमातृपदं विशन्ती
राज्ञी सदा भगवती भवतु प्रसन्ना।।१४।।

याऽनुत्तरात्पमनि पदे परमाऽमृताब्धौ
स्वातन्त्र्यशक्ति लहरीव बहिः सरन्ती।
संलीयते स्वरसतः स्वपदे सभावा
राज्ञी सदा भगवतीं भवतु प्रसन्ना।।१५।।

मेरोः सदैव हि दरीषुविचित्रवाग्भि
र्गायान्ति यां भगवतीं परिवादिनीभिः।
विद्याधरा हि पुलकाङ्कित विग्रहाः सा
राज्ञी सदा भवगतीं भवतु प्रसन्ना।।१६।।

राज्ञी सदा भगवतीं मनसा स्मरामि
राज्ञी सदा भगवतीं वचसा गृणामि।
राज्ञी सदा भगवतीं शिरसा नमामि
राज्ञी सदा भगवतीं शरण प्रपद्ये।।१७।।

राज्ञयाः स्तोत्रमिदं पुण्यं यः पठेद्भक्तिमान्नरः।
नित्यं देव्याः प्रसादेन शिवंसायुज्यमाप्नुयात्।।१८।।

इति श्री जगदम्बास्तुति-राजानक-विद्याधर
विरचिता शुभदा बोभूयात्-इति शिवम्।।

♦♦♦

# श्री दुर्गा पूजा
# (नवरात्रों से संबंध)

ॐ अस्य श्रीआसनशोधनमन्त्रस्य मेरुपृष्ठ ऋषिः, सुतलं छन्दः कूर्मो देवता आसनशोधने विनियोगः।। ॐ प्रीं पृथ्वै आधारशक्तये समालभनं गन्धोनमः अर्घोनमः पुष्पं नमः।। पृथ्वि त्वया ध्रता लोका देवि त्वं विष्णुना धृता। त्वं च धारय मां देवि पवित्रं कुरु चासनम्।। "नमस्कार करना"।। शुक्लाम्बरधरं विष्णुं शशिवर्ण चतुर्भुजम्। प्रसन्नवदनं ध्याये- त्सर्वविघनोपशान्तये।। अभिप्रेतार्थसिद्धयर्थं पूजितो यः सुरैरपि। सर्वविघनाच्छंदे तस्मै गणाधिपतये नमः।। महाबले महोत्साहे महाभयविनाशिनि। त्राहि मां देवि दुष्प्रेक्ष्ये शत्रूणां भयवर्धिनि।। गुरुर्ब्रह्मा गुरुर्विष्णुर्गुरूः साक्षान्महेश्वरः। गुरुरवे जगद्सर्वं तसमै श्री गुरवे नमः। गुरवे नमः, परमगुरवे नमः, परमेष्ठिने गुरवे नमः, परमाचार्याय नमः, आद्यसिद्धेभ्योनमः।। "करन्यास"।। ह्रां अङ्गुष्ठाभ्यां नमः, ह्रीं तर्जनीभ्यां नमः, हूं मध्यमाभ्यां नमः, हैं अनमिकाभ्यां नमः, हौं कनिष्ठिकाभ्यां नमः, हः करतलकरपृष्ठाभ्यां नमः।। "षडङ्गयास"। ह्रां हृदयायनमः, ह्रीं शिरसे स्वाहा, ह्रूं शिखाये वपट्, ह्रैं कवचाय हुँ, ह्रौं नेत्राभ्यां वौषट्, हः अस्त्राय फट्।। "चारों तरफ तिल फेंकना"।। अपसर्पन्तु ते भूता ये

दिवि भुवि संस्थिताः। ये दिक्षु विघनकर्तारस्ते नश्यन्तु शिवाज्ञया।। प्राणायामः।। "मुख और पैरों को पानी छिड़कना"।। तीर्थे स्नेयं तीर्थमेव समानानां भवति।। मा नः शंस्वो अरुरुषो धूर्ति' प्राणङ्ः मर्त्यस्य रक्षाणे ब्रह्मणस्पते।। "पवित्र धारना"।। वसोः पवित्रमिसि शतधारं वसूनां पवित्रमंसि सहस्त्रधारमयक्षमा वः प्रजाया संस्जृामि रायस्पोषण बहुला भवन्ति।। "अपने आप को गन्धादिक लगाना"।। स्वात्मने शक्तिस्वरूपाय समालभनं गन्धोनमः, अर्घोनमः पुष्पं नमः।। "दीपको"।। स्वप्रकाशो महादीपः सर्वतस्तिमिरपहः। प्रसीद मम गोविन्द दीपोऽयं परिकल्पितः।। "धूप को"।। वनस्पतिरसो दिव्यो गन्धाढ्यो गन्धवत्तमः। आघ्रेयः सर्वदेवानां धूपोयं परिकल्पितः।। "सूरज को"।। नमो धर्मनिधानाय नमः स्वकृतसाक्षिणे। नमः प्रत्यक्षदेवाय भास्कराय नमो नमः।। "पानी से संकल्प छोड़ना"।। यत्रास्ति माता न पिता न बन्धुर्भ्रातापि नो यत्र सुहृज्जनश्च। न ज्ञायते यत्र दिनं न रात्रिस्तमात्मदीपं शरणं प्रपद्ये।। स्वात्मने शक्तिस्वरूपाय दीपधूपसङ्कल्पात्सिद्धिरस्तु दीपो नमः धूपो नमः।। ॐ तत्सद्ब्रह्माऽतावत्तिथावद्यामुकमासस्वामुकपक्षस्य तिथामुकायामात्मनो वाङ्मनः कायोपार्जितपापनिवारणार्थं श्रीदेवी प्रीत्यर्थं अमुककामनासिद्ध्यर्थं भगवत्यै अमायै कामायै चार्वङ्ग्यै टङ्कधारिण्यै तारायै पार्वत्यै यक्षिण्यै श्रीशारिकाभगवत्यै श्रीशारदाभगवत्यै श्रीमहाराज्ञी भगवत्यै श्रीज्वालाभगवत्यै व्रीडा भगवत्यै वैखरी भगवत्यै वितस्ता

भगवत्यै गङ्गा भगवत्यै यमुना भगवत्यै कालिका भगवत्यै सिद्धलक्ष्म्यै महालक्ष्म्यै महात्रिपुरसुन्दर्यै शैलपुत्र्यै, ब्रह्मचारिण्यै, कूष्माण्ड्यै, चण्डघण्टायै, स्कन्दमात्रे, सिद्धिदायै, महागौर्यै, कालरात्र्यै, कात्यायन्यै नवदुर्गा भगवत्यै सहस्त्रनाम्नये। दुर्गादेव्यै भवान्यै दीपोनमः धूपोनमः।। "अपसव्येन"।। ॐ तत्सद्ब्रह्माद्यतावत्०। पित्रे पितामहाय, त्रपितामहाय, मात्रे पितामह्यै प्रपितामह्यै, मातामहाय प्रमातामहाय, वृद्धप्रमातामहाय, मातामह्यै वृद्धप्रमातामह्यै इत्यादि भ्यः दीपः स्वधा धूपः स्वधा।। "सव्येन"।। विष्टरसहित पानी में तीन बार फूल और गन्ध छोड़ना"।। संव्वः सृजामि हृदयं संसृष्टं मनो अस्तु वः।१। संसृष्टास्तन्वःसन्तु वः संसृष्टः प्राणो अस्तु वः।२। संय्या वः प्रियास्तन्वः संप्रिया हृदयानि वः। आत्मा वो अस्तु संप्रिय संप्रियास्तन्वो मम।।३।। "वह पानी प्रतिमा पर छोड़ना"।। अश्विनोः प्राणस्तौ ते प्राणन्दत्तां तेन जीवन, मित्रावरुणयोः प्राणस्तौ ते प्राणन्दत्तां तेन जीव, बृहस्पतेः प्राणः स ते प्राणन्ददातु तेन जीव।। "देवी का न्यास" ह्रां अङ्गुष्ठाभ्यां नम इतयादि।। अक्षत युक्त दो दर्भकाण्ड हाथ में रख कर। बीजत्रयाय विदम्हे, तत्प्रधानाय धीमहि, तन्नः शक्तिः प्रचोदयात्।३। ॐ तत्सद्भह्म०। भगवत्याः अमायाः कामायाः चार्वङ्ग्याः टङ्कधारिण्याः तारायाः पार्वत्याः यक्षिण्याः श्रीशारिकाभगवत्याः श्रीशारदाभगवत्याः श्रीमहाराज्ञी भगवत्याः श्रीज्वला भगवत्याः व्रीडा भगवत्याः

वेखरीभगवत्याः वितस्ता भगवत्याः गङ्गा भगवत्याः यमुना भगवत्याः कालिका भगवत्याः सिद्धलक्ष्म्याः महालक्ष्म्याः महात्रिपुरसुन्दर्याः शैलपुत्र्याः, ब्रह्मचारिण्याः, कूष्माण्ड्याः, चण्डघण्टायाः, स्कन्दमातुः, सिद्धिदायाः, महागौर्याः, कालरात्र्या, कात्यायन्याः नवदुर्गाभगवत्याः सहस्त्रनाम्नन्याः दुर्गादेव्याः भवान्याः आत्मनो वाङ्मनः कायोपार्जितपापनिवारणार्थं श्रीदेवीप्रीत्यर्थं देवीपूजनमऽर्चामहं करिष्ये ॐ कुरुष्व।। "तिल फेंक के आसन देना"।। आगच्छ त्वमादेवि ! भक्ताऽशयनिवासिनि ! प्रीत्या दत्तमासनं ते स्वास्यतां मम प्रीतये।। भगवत्याः अमायाः०। इदमासनं नमः। "आवाहन करना"।। भगवत्यै अमायै० युष्मान्वः पूजयामि ॐ पूजय। भवगतीं अमां कामां चार्वङ्गी टङ्कधारिणीं तारां पार्वतीं यक्षिणी श्रीशारिकाभगवतीं श्रीशारदा भगवतीं श्रीमहाराज्ञी भगवतीं श्रीज्वाला भगवतीं व्रीडा भगवतीं श्रीमहाराज्ञी भगवतीं श्रीज्वाला भगवतीं व्रीडा भगवतीं वैखरी भगवतीं वितस्ता भगवतीं गङ्गा भगवतीं यमुना भवगतीं कालिका भगवतीं सिद्धलक्ष्मीं महालक्ष्मीं महात्रिपुरसुन्दरीं शेलपुत्रीं, ब्रह्मचारिणीं कूष्माण्डीं, चण्डघण्टां, स्कन्दमातरं, सिद्धिदां, महागौरीं, कालरात्रीं, कात्यानीं, नवदुर्गा भवगतीं सहस्त्रनाम्नीं दुर्गा देवी भवानी आवाहयिष्यामि ॐ आवाहय।। श्री शारिके त्रिपुरसुन्दरि शर्मासिन्धो ज्वालेऽत्र राज्ञि वरदेऽखिलविश्वमातः। शर्वार्धदेहनिलये धिपणे मदीयां पूजामिमां स्वपरिवारयुता गृहाण।। हे देवि त्वं पराशक्ते

भक्तानुग्रहकारिणि। अस्मद्दयानुरोधेन सन्निधि कुरु चात्र भोः।।३।। इत्याहूय च गायत्रीं त्रिःसमुच्चार्य तत्ववित्। मनसा चिन्तितैर्द्रव्यैर्देवीमात्मनि पूजयेत्।। तेजोरूपां ततः क्षिस्वा प्रतिमायां पुनर्यजेत्।। यवान्विकीर्य।। प्राणायामः। पाद्यर्थमुदंक नमः।। "पानी हाथ से पात्र में छोड़ना"।। शन्नोदेवीरभिष्टय आपो भवन्तु पीतये।। शंय्यो स्त्रवन्तु नः। यह द्रव्य उसमें छोड़ना।। लाजाश्च कुङ्कुमं चैव सर्वौषधिसमन्वितम्। दर्भाङ्कुरं जलं चैव पञ्चाङ्गं पाद्यलक्षणम्।। भगवति पाद्य पाद्यम्।। एहि कामे कामहर्त्रि स्वेष्टकामदुघे शिवे। भक्तया पाद्यं मया दत्तं क्षाल्यतां पादपीठिकाम्।। भगवत्यै अमायै० पाद्यंनमः। शेषं निवारयेत्।। पुनः शन्नो देवी०।। "यह द्रव्य उसमें छोड़ना"। आपः क्षीरं कुशाग्राणि घृतं च दधि तण्डुलाः। यवाः सिद्धचार्थकाश्चेति ह्यर्घ्यमष्टाङ्गमुच्यते।। भगवति अर्घ्यं अर्घ्यं।। चार्वगङ्गत्वमिहागच्छ सतां चार्वगङ्गदायिनि। मयाऽऽनीतमर्घ्यमिदं शुद्धचेतां मुखहस्तकौ।। भगवती अमे कामे चार्वङ्गि टङ्कधारिणि तारे पार्वति यक्षिणि श्रीशारिका भगवति श्रीशारदा भगवति श्रीमहाराज्ञी भगति श्रीज्वालाभगवति व्रीडा भगवति वैखरीभवगति वितस्ताभगवति गङ्गाभगवति यमुनाभगवति कालिकाभगवति सिद्धलक्ष्मीः महालक्ष्मीः महात्रिपुरसुन्दरि शैलपुत्रि, ब्रह्मचारिणि, कुष्माण्डि, चण्डघण्टे, स्कन्तमातः, सिद्धिदे, महागौरि, कालरात्रि, कात्यायनि नवदुर्गाभगवति, सहस्त्रनाम्नि दुर्गादेवि भवानि इदं वोऽर्घ्यं नमः।। सफा

पानी से।। टङ्कधारिणि त्वमेहि दुष्टान् टङ्कैर्विधारिणि। गृहाणाचमनं दत्तं मुखान्तर्मलमृष्टये। भगवत्यै० आचमनीयं नमः।। और भी पानी से।। आगच्छ तारे स्तानेऽस्मिन् भवसागरतारिणि। मलोत्थापनकं देहात्मंत्रस्न्नानं च स्वीकुरु।। भगवत्यै० मन्त्रस्नानीयं नमः।। लाजागन्धवचः कुष्टं वालुकं शङ्खपुष्पकम्। कुङ्कुमागुरुकर्पूरान् स्ननें देव्याः प्रकल्पयेत्।। इदमपिच।। तामाग्निवर्णां तपसा ज्वलन्तीम वैरोचनीं कर्मफलेषु जुंष्टाम्। दुर्गां देवीं शरणमहं प्रपद्ये सुतरसितरसे नमः।।१।। अग्ने त्वं पारया नव्यो अस्मान्स्वस्तिभिरति दुर्गाणि विश्वा। पूश्व पृथ्वी बहुला न उवीं भवा तोकाय तनयाय शंव्योः।।२।। विश्वानि नो दुर्गहा जातवेदः सिन्धु न नावा दुरितातिपार्षि। अग्ने अत्रिवन्नमसा गृणानोऽस्माकं वोध्यविता तनूनाम्।।३।। पृतनाजितं सहमानमुग्रमऽग्निं हुवेम परमात्सधस्यात्। स नः पर्षदतिदुर्गाणि विश्वा क्षामाद्देवो अति दुरितात्याग्निः।।४।। प्रतोहि कमीड्यो अध्वरेपु सनाच्च होता नव्यश्व सत्सि। स्वां चाग्ने तन्वं पिप्रयस्वास्मभ्यं च सौभगमा यजस्व।।५।। यद्वाग्वदन्त्यविचेतनानि राष्ट्री देवानां निपसाद मन्द्र। चसस्त्र ऊर्जं दुदुहे पयांसि कस्विदऽस्याः परमं जगाम।।६।। देवीं वाचमजनयन्त देवास्तां विश्वरूपाः पाशवो वदन्ति। सा नो मन्द्रेषमूर्जं दुहाना धेनुर्वागस्मानुप सुष्टुतैतु।।७।। प्रणो देवी सरस्वती वाजेभिर्वाजिनीवती।। धीनामवित्र्यवतु।।८।। ॐ गायत्र्यै नमः ॐ भूर्भुवः स्वः तत्सवितुर्वरेण्यं भर्गो

देवस्य धीमहि, धियो यो नः प्रचोदयात्।।३।।६।। जात वेद से सुनवाम सोममरातीयतो निदहाति वेदः। स नः पर्षदति दुर्गाणि विश्वा नावेव सिन्धुं दुरितात्याग्निः।।१०।। भगवत्यै० अष्टौ स्नानानि नमः।। ॐ नमो देवेभ्यः। "कंठोपवीती" स्वाहा ऋषिभ्यः। "अपसव्ये" स्वधा पितृभ्यः। "सव्येन" आ ब्रह्मस्तम्बपर्यन्तं ब्रह्माण्डं सचराचरं जगत् तृप्यतु तृप्यतु तृप्यतु एवमस्तु।। फिर पात्र में पानी 'ऐंक्लींसौः हसरक्षमलवयऊंह्रींश्रींरां' इस मन्त्र से सात बार मन्त्रित करके अपने माथे तक ले के अमृत से भरा हुआ ध्यान करके देवी के सिर पर छोड़ना। यह मन्त्र गुडक है।" "बाऐ करतल में अक्षत युक्त पानी रख के आरात्रिका निकालना (आलत)।" गृह्णन्तु चण्डिकाभक्ता भूताः प्रासादवात्तगाः। पञ्चभूतात्मकाः प्रेतास्ते तृप्यन्तु सदा वौष्ट्।। देवी के पादों का जल नेत्रों को मलना"। ऐहि देवि पराशक्ते भगवत्यमलाशये। प्रकाशय परं तेजो नेत्रस्पर्शेन वैष्णवि।। उत्तिष्ट देहि शरणं भुवि चित्रमाये ह्युत्तिष्ठ दुष्टकृतदुःखततिं कृणीहि। उत्तिष्ठि भक्तवरदायकमऽक्षि धेहि ह्युत्तिष्ठ शोकभयकुञ्चमिदं लुनीहि।। "देवी का बिछाना"।। आसनाय नम, सिंहासनाय नमः, शवासनाय नमः, मुञ्चासनाय नमः, ज्ञानासनाय नमः।। "अनुलेपन करना"।। सृष्टेरधिष्ठितिभुवः किमु चासनं ते, नानाचमत्कृतिकृतः किमु भूषणं वा। किं देयमस्ति भुवनासुप्रदायिकाया वार्च्य किमस्ति स्वयमेव त्रयीजनन्याः।। "ऐसे ही देवीस्तोत्र पढ़ते हुए देवी को

चन्दनादि द्रव्यों से अनुलेपन करना"।। "वस्त्र पहनना" एहि पार्वति शैलोत्थे वस्त्रं त्वग्रोमकोशजम्। नानावर्ण मयानीतं त्रियतां चारु भावजम्।। भगवत्यै० वस्त्रं परिकल्पयामिनमः।। "जनू पहनना"।। यक्षिण्येहि यज्ञमातः सुवर्णतन्तुनिर्मितम्। त्रिगुणात्म यज्ञसूत्रं मयानीतं सूवीष्ट्यताम्। भगवत्यै० यज्ञोपवीतं नमः "गन्ध चढ़ाना"।। शारिके तवं विद्रुमाभे चन्दनागुरुकुङ्कुमैः। संस्कृतं तिलकैं भाले त्क्रियतां मम प्रीतये।। भगवत्यै० समालभनं गन्धेनमः। लेपं निवारयेत्।। "अक्षत और फूल चढ़ाना" (पहले पुष्पाँजलि)।। हे शारदे शास्त्रदात्रि दूर्वार्घल्विपुष्पवत्। नानाविधं पुष्पजाति प्रीत्यानीतं सुमर्द्यताम्।। ॐ गांगणपतये नमः, भौभीमराजायानमः, कांकुमारायनमः। जुंजाङ्गलेश्वरायनमः। ओंले इन्द्रायनमः ॐ ह्रीं अग्नये नमः ॐ ह्रूंधर्मराजाय, नेर्ऋतये, वरुणाय, वायवेनमः, कुबेराय, ईशानायनमः, ब्रह्मणे, अनन्तायनमः। धूम्रार्चिषेनमः, ऊष्माय, ज्वलिन्यै, ज्वालिन्यै, विस्फुलिङ्गिन्यै, सुश्रिये, स्वरूपाय, कपिलायै, हव्यावाहनायै, कव्यवाहनाय, दशकलात्मने ब्रह्मये नमः। तपिन्यैनमः, तापिन्यै नमः, घम्रायै, मारीच्यै, जुलिन्यै, तथ्यै, सुषुम्णाये भौग्दाये विश्वायै, बोधिन्यै, धारिण्यै, क्षमायै, द्वादशकलात्मनेसूर्यायनमः। अमृतायै, आनन्दायै, पूषा यै, तुष्ट्यै, पुष्ट्यै, रत्यै, धृत्यै, शिशिन्यै, चण्डिकायै, कान्त्यै, ज्योत्स्नायै, श्रियै, प्रीत्यै, अङ्गदायै, पूर्णायै, पूर्णामृतायै, पोडशकलात्मनेशश्निनमः। अभिष्टसिद्धिं मे

देहि शरणागतवत्सले। भक्तया समर्पये तुभ्यं प्रथमावरणार्चनम्।। ॐ गुरवे नमः, परमगुरवेनमः, परमेष्ठिगुरवेनमः।। अभिष्टसि० द्वितीयावरणार्चनम्। अनन्तनागराजायनमः, वासुकिना०, कार्कोटना०, शङ्खपालना०, तक्षकना०, कलिकना०, पदमना०, महापद्मनागराजाय नमः।। अभीष्ट०, तृतीयावरणार्चनम्।। असिताङ्गभैरवयुत- ब्राहम्यैनमः, उन्मत्तभै० कौमार्यै, भीषणभै० चामुण्डायै, कपालेश्वरभै० वाराह्यै, संहारभै० महालक्ष्म्यै नमः।। अभीष्ट चतुर्थावरणार्चनम्।। दुर्गायैनमः, भगवत्यै, अमायै, कामायै, चार्वग्यै, टङ्कधारिण्यै, तारायै, पार्वत्यै, यक्षिण्यै, श्रीशारिकायै, श्रीशारदायै, श्रीमहाराज्ञै, श्रीज्वालायै, व्रीडायै, वैखर्यै, वितस्तायै, गङ्गायै, यमुनायै, कालिकायै, सिद्धलक्ष्म्यै, महात्रिपुरसुन्दर्यैनमः।। अभीष्ट० पञ्चमावरणार्चनम्।। गायत्र्यै, सावित्र्यै, सरस्वत्यै, बालायै, भुवनेश्वर्यै।। अभीष्ट० पष्ठावरणार्चनम्।। वज्राय, शक्तये, दण्डाय, खड्गाय, पाशाय, ध्वजाय, गदायै, त्रिशूलाय, पद्माय, चक्रायनमः।। अभीष्ट० सप्तमावरणार्चनम्।। अग्नयादित्याभ्यां, वरुणाचन्द्रमोभ्यां, कुमारभौमाभ्यां, विष्णुवुधाभ्यां, इन्द्राबृहस्पतिभ्यां, सरस्वती शुक्राभ्यां, प्रजापतिशनैश्वराभ्यां, गणपतिराहुभ्यां, रुद्रकेतुभ्यां, ब्रह्मध्रुवाभ्यां, अनन्तागस्त्याभ्यां नमः।। पराशक्तये, चिछक्तये, सहस्त्रनाम्नयै, दुर्गादेव्यै, भवान्यै, अर्घोनमः, पुष्पंनमः।। "धूप चढ़ाना"। महाराज्ञि राजसेव्ये साज्यं गुग्गुलंस्कृतम्। अष्टगन्धयुतं धूपं मया नीतं सुजिध्रयताम्।

भगवत्यै० धूपं परिकल्पयामि नमः।। "कपूर व रत्नदीप"। एहि ज्वाले महाज्वाले कर्पूरपीठमण्डितमृ। नानावर्ति रत्नदीपं मया दत्तं प्रकाश्यताम्। भगवत्यै रत्नदीपं कर्पूरं समर्पयामि नमः।। "चामर"।। एहि व्रीडे वीतव्रीडे चामरं पिच्छलैर्युतम्। सुखवातप्रदं सम्यक् दत्तं स्वीक्रियतामिदम्।। "चामर स्तोत्र भी पढ़ कर"।। भगवत्यै० चामरं समर्पयामिनमः।। "अन्य उपकरण" एहि दुर्गे पराशक्ते भत्तया कंकतिकां शुभाम्। "ध्वजं छत्रं व्यञ्जनं च मया नीतं विभूष्यताम्। भगवत्यै० उपकरणानि समर्पयामि नमः।। "आईना"।। हे वैखरि विश्वमातस्त्वद्दृष्ट-याऽदर्शविम्बवत्। भाति विश्वं स्वयं त्वं साऽऽदर्श दत्तं सुपश्यताम्।। भगवत्यै० आदर्श समर्पयामि नमः।। एताभ्यो देवताभ्यः दीपोनमः धूपोनमः।। सपरिवारायाः पराशक्तेरर्घ्यदानाद्यर्चनविधिः सर्वः परिपूर्णोऽस्तु।। "मधुपक" हे वितस्ते पापहर्त्रि क्षीराज्यमधुशर्करम्। षड्रसास्वादितं भक्ष्यं चरुं न्यस्तं सुस्वाद्यताम्। भगवत्यै० चरुं। स०।। "फूलोकी अञ्जलि"।। एहि गङ्गे विष्णुपज्जे विल्वदूर्वाब्जमण्डिताम्। पुष्पाज्जलिमिमां भत्तया दत्तां नस्यां सुजिध्यताम्।। भगवत्यै० पुष्पाञ्जलि स०।। "फल"।। यमुने त्वं यमस्वसुर्भव्येखर्जूरदाडिमम्। द्राक्षारुकाम्बराम्भादि फलं प्रत्तं सुभक्ष्याताम्।। भगवत्यै० फलं स०।। "ताम्बूल"।। कालि केत्वं कोकिलाभे पूगताम्बूलपानकम्। मुखभागन्धदं दत्तं प्रीत्या श्वासं सुगन्ध्याताम्। भगवत्यै० ताम्बूलं सम०।। "एक प्रक्रम

देना"।। सिद्धलक्ष्मीः विष्णुतिन ज्ञाताज्ञातकृतानि मे। दशवेनांसि दह्यन्तां प्रत्र्कमैकविधानतः।। ॐ नमो भगवत्यै भगवति प्रसीद।। "स्तोत्रपाठादि पढ़कर अष्टाङ्गप्रणाम देना"। महालक्ष्मी मारमातर्भुक्तिमुक्तिफलप्रदम्। भक्तया कृतं प्रणाम ते साष्टाङ्गं स्वीविधीयताम्।। उभाभ्यां जानुभ्यां पाणिभ्यामुरसा शिरसा मनसा वचसा च नमस्कारं करोमि नमः।। अन्नं नमः २ आज्यमाज्यमऽद्यदिनेऽ-द्ययथासङल्पात् सिद्धिरस्तु। अन्नहीनं क्रियाहीन विधिहीनं द्रव्यहीनं मन्त्रहीनं च चद्गतं तत्सर्वमऽच्छिन्द्रं सम्पूर्णमस्तु एवमस्तु।। शन्नो देवी०। भगवत्यै अपोशानं नमः।। "पुनः" शन्नोदेवी०। भगवत्यै० दक्षिणायै तिलहिरण्यरजतनिष्कर्ण ददानि। एता देवताः सदक्षिणाऽन्नेन प्रीयन्ता प्रीताः सन्तु।। "नैवेद्यः"।। अमृतेशमुद्रयाऽमृतीकृत्य अमृतमस्तु अमृतायतां नैवेद्यम्। सावित्राणि सावित्रस्य देवस्य त्वा सावितः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे।। भगवत्यै अमायै० ॐ नमो नैवेद्यं निवेदयामि नमः।। "योगिनीबलि- (चट्)"।। आकाशमातृभ्यो बलिंनमः, समालभनं गन्धोनमः अर्घोनमः पुष्पं नमः।। "देवीको"।। दूर्गा भगवत्यै फलादिसमर्पयामिनमः।। "क्षेत्रपालको"।। क्षांक्षेत्राघिपतयेऽन्नं नमः रां राष्ट्राघिपतयेऽन्नं नमः सर्वाभयवरप्रद मयि पुष्टिं पुष्टिपतिर्ददातु।। "नित्यकर्म जपादि करके। पृच्छा करना"।। बीजत्रयाय विदमहे, तत्प्रधानाय धीमहि, तन्नः शक्तिः प्रचोदयात्।।३।। ॐ तत्सत्राद्याता-

वत्तिथावद्यामुकमासस्याऽमुकपक्षस्य तिथावमुकायां भगवत्याः अमायाः कामायाः० आत्मनो वाङ्गनः कायोपार्जितपापानिवारणार्थं श्रीदेवीप्रीत्यर्थं देवीपूजनमाच्छिद्रंसम्पूर्णमस्तु एवमस्तु।। "तर्पण करना" एताभ्यो देवताभ्यो यवोदकं नमः उदकतर्पणंनमः।। "क्षमाफूलचढ़ाना" आपन्नोस्मि शरण्यासि सर्वावस्थासु सर्वदा। भवानि त्वां प्रपन्नोस्मि रक्ष मां शरणागतम्। "स्तोत्रादि पढ़कर" अपराधो भवत्येव सेवकस्य पदे पदे। का परा सहते देवि केवलं स्वामिनं विना।। यद्दतं भक्तिमात्रेणा पत्रं पुष्पं फलं जलम्। निवेदितं च नैवेद्यं तगृदृहाणानुकम्पया।। आह्वानं नैव जानामि नैव जानामि पूजनम्। पूजाभागं नजानामि क्षम्यतां परमेश्वरि।। उभाभ्यामिति अष्टाङं प्रणामं करोमिनमः।। "तर्पण"। नमो ब्रह्मणे नमों अस्त्वग्नये नमः पृथिव्यै नम ओपधीभ्यः।। नमो वाचे नमो वाचस्पतये नमो विष्णवे बृहते कृ णोमि।।३।। इत्येतासामेव देवतानां सलोकतां सायुज्यं सार्ष्टिं सामीप्यमाप्नोति य एवं विद्वान् स्वाध्यायमधीते।। "माफी की प्रार्थना" स्वच्छस्वान्तेन ते भत्तया महात्रिपुरसुन्दरि। यथाभावं कृतां पूजां स्वीकृत्य विश स्वाश्रयम्।। मनस्यन्तर्गतं मन्त्रं मन्त्रस्यान्तर्गतं मनः। मनोमन्त्रमयं दिव्यमेकपुष्पं पराऽर्चनम्।। इति दुर्गापूजा सम्पूर्ण।।

◆◆◆

## गौरी आरती

ओं जय जय जय जय जग माता,
शरण तुम्हारे आये हैं।
हंसासण पर बैठी हो माता,
ब्रह्म-स्वरूप घरायो है।
चार वेद भुज चार विराजे,
चार वेद बज गायो है। ओं जय०
गरुड़ासन पर बैठी हो माता,
विष्णु-स्वरूप धरायो है।
मोर-मुकट पीताम्बर साजे,
मुखधर बीन बजायो है। ओं जय०
भ्रष्भासन पर बैठी हो माता,
शंकर-स्वरूप धरायो है।
जटा-जूट सिर गंगा विराजे,
वासुक नाग लपटायो है। ओं जय०
सिंहासन पर बैठी हो माता,
शक्ति-स्वरूप धरायो है।
भक्त जनों की लेकर आरती
चरण कमल चितरायो है। ओं जय०

।। श्रीः ।।

# देवीखड्गमालास्तोत्ररत्नम्

## चेन्नपुयोण्य

वाविल रामखामिशस्त्रुलु अण्डु सन्क्ष्
इत्येतैः प्रकटितम्
ॐ श्री गणेशाय नमः

## श्री गुरुपादुकावन्दनम्

ऐंकार-हींकार-रहस्युक्त
श्रींकारगुदुर्थ-महाविभूत्या ।
ओंकारमर्म-प्रतिपादिजीम्यां
नमो नमः श्री गुरुपादुकाश्याम् ।।

## आत्म समर्पणम्

जपो जल्पः शिल्प सकलमपि मुद्राविरचना
गतिः प्रादक्षिण्यक्रमण-मशानाद्याहुति-विधिः ।
प्रणामः सबेशः सुख मखिल-मात्मार्पणदृशा
सपर्या पर्वाय-स्तव भवतु यन्मे विलसितम् ।।

## श्रीबालात्रिपुरसुंदर्ये नमः

## ।। देवीखड्ङ्गमालास्तोत्रम् ।।

श्लो, ह्रींकारासनगर्भितानलशिखां सौं: क्ली कलां
विभ्रतीं
सौवर्णाबरधारिर्णी वरसुधाधैतां त्रिणोत्रोज्ज्वलाम।
वदे पुस्तकपाशमंकुशधरां स्त्रग्भूषितामुज्जवलां
त्वां गौरीं त्रिपुरा परत्पिरकलां श्रीचक्रसंचारिणीम्।।

अस्य श्रीशुद्धशक्तिमालामंत्रस्य, उपस्थेंद्रियाधिष्ठायी वरुणादित्यऋषिः, दैवीगायत्रीच्छंदः, सात्विककका-रभट्टारकपीठस्थितकामेश्वरांकनिलय महाकामेश्वरी श्रीललिता भट्टारिका देवता, ऐम बीजं, ल्की शक्तिः, सौः कीलकं, मम खड्ङ्गसिद्धयर्थे, सर्वाभीष्ठसिध्यर्थे जपे विनियोगः। मूलमंत्रेण षंडगन्यासं कुर्यात् ।।

मूल मंत्रः ओं ऐं ह्रें श्रीं ऐं ल्कीं सौः स्वाहाः

### ।।ध्यानम् ।।

तादृश खड्ङ्माप्रोति येन हस्तस्थितेन वै।
अष्टादशमहाद्वीपसम्राड्भोक्ता भविष्यति ।।
आरक्ताभां त्रिणेत्राममनिमुक्टवत्तीं रत्नताटङ्करम्यॉं
हस्ताम्भोजैस्सपाशाकुश मदनधनु स्सायकैविसफुंरतीम।
आपीनोत्तुगवक्षोरुहथटविलठत्तारहारोज्जवलांगीं
ध्यायेद्ंभेरुहस्थामरुणिवसनामीश्वरीमीश्वराणाम् ।।
ल मित्यादि पंचपूजां कुर्यात्-यथाशक्ति भूलमन्त्रं जपेत।।

ओं ऐं ह्रीं श्रीं ऐं ल्कीं सौः, ओं नमस्त्रिपुरसुंदरि, हृदयदेवि, शिरोदेवि, शिखादेवि, कवचदेवि, नेत्रदेवि, अस्त्रदेवि, कामेश्वरि, भगमालिनि, नित्याकिल्न्ने, भेरुंडे, वह्निवासिनि, महावज्रेश्वरि, शिवदूति, त्वरिते, कुलसुंदरि, नित्ये, नीलपताके, विजये, सर्वमंगले ज्वालामालिनि, चित्रे, महानित्ये, परमेश्रवर परमेश्वरि, मित्रेशमयि, षष्टीशमयि, उड्डीशमयि, चर्यानाथमयि, लोपामुद्रामयि, अगस्यमयि, कालतापनमयि, धर्माचार्यमयि, मुक्तकेशीश्रवरमयि, दीपकलानाथमयि, विष्णुदेवमयि, प्रभाकरदेवमयि, तेजोदेवमयि, मनोजदेवमयि, कल्याणदेवमयि, वासुदेवमयि, रत्नदेवमयि, श्रीरामानंदमयि, अणिमासिद्धे, लघिमासिद्धे, गरिमासिद्धे, महिमासिद्धे, इशित्वसिद्धे, वशित्वसिद्ध, प्राकाम्यसिद्धे, भुक्तिसिद्धे, इच्छासिद्धे, प्राप्तिसिद्धे सर्वकामसिद्धे, ब्राह्मि, माहेश्रि, कौममारि, वैष्णवि, वाराहि, माहेंद्रि, चामुंडे, महालक्षमी,सर्वसंक्षोभिणि, सर्वविद्राविणि, सर्वाकर्षिणि, सर्ववशंकरि, सर्वोन्मादिनि, मर्वमहांकुशे, सर्वखेचरि, सर्वबीजे, सर्वयोने, सर्वत्रिखंडे, त्रैलोक्यमोहनचक्रस्वामिनि, प्रकटयोगिनि, कामाकर्षिणि, बुंद्धन्राकर्षिणि, अहंकाराकर्षिणि, शब्दाकर्षिणि, स्फर्शाकर्षिणि, रुपाकर्षिणि, रसाकर्षिणि, गंधाकर्षिणि, चित्ताकर्षिणि, धैर्याकर्षिणि, स्मृत्याकर्षिणि, नामकर्षिणि, बीजाकर्षिणि, आत्माकर्षिणि, अमृताकर्षिणि, शरीराकर्षिणि, सर्वाशापरिपूरक चक्रस्वामिनि, गुप्तयोगिनि, अनंगाकुसुमे, अनंगमेखले, अनंगमदने, अनङ्गमदनातुरे, अनंगरेखे, अनंगवेगिनि,

अनंगाकुशे, अनगमालिनि, सर्वसंक्षोभणचक्रस्वामिनि, गुप्ततरयोगिनि, सर्वसंक्षोभिणि, सर्वविद्राविणि, सर्वाकर्षिणि, सर्वाह्लादिनि, सर्वसम्मोहिनि, सर्यस्तंभिनि, सर्वजृंभिणि, सर्ववशंकरि, सर्वरजंनि, सर्वोन्मादिनि, सर्वार्थसाधिके, सर्वसंपत्तिपूरणि, सर्वमत्रमयि, सर्वद्वंद्वक्षयंकरि, सर्वसौभाग्यदायकचक्रस्वामिनि, संप्रदाययोगिनि, सर्वसिद्धिप्रदे, सर्वसपत्प्रदे, सर्वप्रियंकरि, सर्वमंगलकारिणि, सर्वकामप्रदे, सर्वदुःखविमोचनि सर्वमृत्युप्रशमनि, सर्वविघ्ननिवारिणि, सर्वागंसुंदरि, सर्वसौभाग्यदायिनि, सर्वार्थसाधकचक्रस्वामिनि, कुलोत्तीर्णयोगिनि, सर्वज्ञे, सर्वशक्ते, सर्वैश्रवर्यप्रदायिनि, सर्वज्ञानमयि, सर्वव्ययाधिविनाशिनि, सर्वाधारस्वरूपं, सर्वपापहरे, सर्वानंदमयि, सर्वरक्षास्वरूपिणि, सर्वेप्सितफलप्रदे, सर्वरक्षाकरचक्रस्वा-मिनि, निगर्भयोगिनि, वशिनि, कामेश्वरि, मोदिनि, विमले, अरुणे, जयिनि, सर्वेश्वरि, कौलिनि, सर्वरोगहरचक्रस्वामिनि, रहस्योगिनि, बाणिनि, च पिनि, पाशिनि, अंकुशिनि, महाकामेश्वरि, महावज्रेश्वरि, महाभगमालिंनि, सर्वसिद्धिप्रदचकस्वामिनि, अतिरहस्योगिनि, श्रीश्रीमहाभट्टारिके, सर्वानंदमयचक्रस्वामिनि, परापररहस्ययोगिनि, त्रिपुरे, त्रिपुरेशि, त्रिपुरसुंदरि, त्रिपुरांबे, महात्रिपुरसुंदरि, महामहेश्वरि, महामहाराज्ञि, महामहाशक्ते, महामहागुप्ते, महामहाज्ञप्ते, महामहानंदे, महामहास्कधे, महामहाशये, महामहाश्रीचक्र नगरसामिनज्ञि नमस्ते नमस्ते नमः शक्ता एषा विद्या महासिद्धिदायिनी ग्मृतिमात्रतः।

अग्निवातमहाक्षोभे राजा राष्ट्रत्व विपक्वे।
लुंठने तस्करमये संग्रामे सलिलपक्वे।
समुद्रयानविक्षोभे भूतप्रेतादिके भवे।।
अपरमारज्वरब्याधिमृत्युक्षामादिजे भये।
शाकिनीपूतनायक्षरक्षः कुश्मांडजे भये।।
मित्रभेदे गृहभये ब्यसनेष्वामिचारिके।
अन्येष्वपिच दोषेपु मालामंत्र स्मरेन्नरः।।
सर्वोपद्रवनिर्मुक्तस्साक्षाच्छिबमयो भवेत्।
आपत्काले नित्यपूजां विस्नारात्कर्तुमारभेत्।।
एकवार जपध्यान सर्वपूजाफलं लभेत्।
नवावरणदेवीनां ललिताया महौज़सः।।
एकत्र गणनारूपो वेदवेदांगगोचरः।
सर्वागमरहस्यार्थ स्मरणात्पनाशिनी।।
ललिताया महोशान्या मालाविद्या महीयसी।।
नरवश्य नरेद्राणां वश्यं नारीवशकरम्।।
अणिमादिगुणैश्बर्य रंजन पापभंजनम्।
तत्तदाबरणस्थायि देवताबृंदमत्रकम्।।
मालामत्रं पर गुह्म परंधाम प्रकीर्तितं
तत्तदावरणस्थायि देवताबृं दमंत्रकम्।।
शक्तिमाला पचधा स्याच्छिवमाला च तादृशी।।
तस्माद्रोप्यतराद्रोप्यं रहसय भुक्तिमुक्तिदम्।

।।इति श्रीवामकेश्वरततें उमामहेश्वरसंवादे
देवीखडङ्गमालास्तरतम्।।

## ।। देवीखड्गमालास्तोत्रनामावलिः ।।

१. ओं त्रिपुरसुंदर्यै नमः
२. ओं हृदय देव्यै नमः
३. ओं शिरोदेव्यै नमः
४. ओं शिखादेव्यै नमः
५. ओं कवचदेव्यै नमः
६. ओं नेत्रदेव्यै नमः
७. ओं अस्त्र देव्यै नमः
८. ओं कामेश्वर्यै नमः
९. ओं भगमालिन्यै नमः
१०. ओं नित्यकिल्न्नायै नमः
११. ओं भेरुण्डायै नमः
१२. ओं वह्निवासिन्यै नमः
१३. ओं महावज्रेश्रवर्यै नमः
१४. ओं शिवदूत्यै नमः
१५. ओं त्वरितायै नमः
१६. ओं कुलसुंदर्यै नमः
१७. ओं नित्यायै नमः
१८. ओं नीलपताकायै नमः
१९. ओं विजायायै नमः
२०. ओं सर्वमंगलायै नमः
२१. ओं ज्वालामालिन्यै नमः
२२. ओं चित्रायै नमः
२३. ओं महानित्यायै नमः
२४. ओं परमेश्वरपरमेश्वर्यै नमः
२५. ओं मित्रेशमय्यै नमः
२६. ओं पष्ठीशमय्यै नमः
२७. ओं उडीशमय्यैं नमः
२८. ओं चर्यानाथमय्यै नमः
२९. ओं लोपामुद्रामय्यै नमः
३०. ओं अगस्त्यमय्यै नमः
३१. ओं कालतापनमय्यै नमः
३२. ओं धर्माचार्यमय्यै नमः
३३. ओं मुक्तकेश्वरमय्यै नमः
३४. ओं दीपकल्लानाथमय्यै नमः
३५. ओं विष्णुदेवमय्यै नमः
३६. ओं प्रभाकरदेवमय्यै नमः
३७. ओं तेजोदवेमय्यै नमः
३८. ओं मनोजदेवमय्यै नमः
३९. ओं कल्याणदेवमय्यै नमः
४०. ओं वासुदेवमय्यै नमः
४१. ओं रत्नदेवमय्यै नमः
४२. ओं श्रीरामानंदमय्यै नमः
४३. ओं अणिमासिद्धये नमः
४४. ओं लघिमासिद्धये नमः
४५. ओं गरिमासिद्धये नमः
४६. ओं महिमासिदये नमः
४७. ओं ईशित्वसिद्धये नमः
४८. ओं वशित्वसिद्धये नमः
४९. ओं प्राकाम्यसिद्धये नमः
५०. ओं भुक्तसिद्धये नमः

५१. ओं इच्छासिद्धये नमः ५२. ओं प्राप्तिसिद्धये नमः
५३. ओं सर्वकामसिद्धये नमः ५४. ओं ब्राह्मये नमः
५५. ओं माहेश्वर्यै नमः ५६. ओं कौमार्यै नमः
५७. ओं वैष्णव्यै नमः ५८. ओं वाराह्मे नमः
५९. ओं माहेंद्रये नमः ६०. ओं चामुंडाये नमः
६१. ओं महालक्ष्म्यै नमः ६२. ओं सर्वसाक्षोभिण्यै नमः
६३. ओं सर्वविद्राविण्ये नमः ६४. ओं सर्वोकर्षिण्यै नमः
६५. ओं सर्वोन्मादिन्यै नमः ६६. ओं सर्ववशकर्यै नमः
६७. ओं सर्वमहांकुशाये नमः ६८. ओं सर्वखेचर्यै नमः
६९. ओं सर्वबीजाये नमः ७०. ओं सर्वयोन्यै नमः
७१. ओं सर्वत्रिखडाये नमः ७२. ओं त्रैलोक्यमोहनच-क्रस्वा मिन्ये नमः
७३. ओं प्रकटयोगिन्यै नमः ७४. ओं कामाकर्षिण्यै नमः
७५. ओं बुदभ्याकर्षिण्यै नमः ७६. ओं अहकाराकर्षिण्यै नमः
७७. ओं शब्दाकर्षिण्यै नमः ७८. ओं स्पर्शाकर्षिण्यै नमः
७९. ओं रूपाकर्षिण्यै नमः ८०. ओं रसाकर्षिण्यै नमः
८१. ओं गंधाकर्षिण्यै नमः ८२. ओं चिताकर्षिण्ये नमः
८३. ओं धैर्याकर्षिण्यै नमः ८४. ओं स्मत्वाकर्षिण्यै नमः
८५. ओं नामाकर्षिण्यै नमः ८६. ओं बीजाकर्षिण्यै नमः
८७. ओं आत्माकर्षिण्यै नमः ८८. ओं अमुकर्बिण्यै नमः
८९. ओं शरीराकर्षिण्यै नमः ९०. ओं सर्वाशा परिपूरक चक्रस्वामिन्यैध्व नमः
९१. ओं गुप्तयोगिन्यै नमः ९२. ओं अनगकुसुमाये नमः
९३. ओं अन्नगमेखलाये नमः ९४. ओं अनगमदनाये नमः
९५. ओं अनंगमदनातुरीये नमः ९६. ओं अनंगरेखाये नमः
९७. ओं अनंगवेगिन्यै नमः ९८. ओं अनंगाकुशाये नमः

९९.ओं अनंगमालिन्यै नमः १००. ओं सर्वसंक्षोभणचक्र-स्वामिन्यै नमः

१०१.ओं गुप्तरयोगिन्यै नमः १०२.ओं सर्वसंक्षोभिण्यै नमः

१०३.ओं सर्वविद्राविण्यै नमः १०४.ओं सर्वाकर्षिण्यै नमः

१०५.ओं सर्वाह्लदिन्यै नमः १०६.ओं सर्वसममोहिन्यै नमः

१०७.ओं सर्वस्वाभिन्यै नमः १०८.ओं सर्वजृंभिण्यै नमः

१०९.ओं सर्वबशकर्यै नमः ११०.ओं सर्वरजन्यै नमः

१११.ओं सर्वोन्मादिन्यै नमः ११२.ओं सर्वर्थसाधिकायै नमः

११३.ओं सर्वसंपतिपूरण्य ११४.ओं सर्वमत्रमऽयै नमः

११५.ओं सर्वद्वंद्वक्षयंकर्यै नमः ११६.ओं सर्वसोभाग्यदायक चस्वामिन्यै नमः

११७.ओं संप्रदाययोगिन्यै नमः ११८.ओं सर्वसिद्धिप्रदायै नमः

११९.ओं सर्वप्रियकर्ये नमः १२०.ओं सर्वमंगलकारिण्यै नमः

१२१.ओं सर्वकामप्रदायै नमः १२२.ओं सर्वदुःखविमोचन्यै नमः

१२३.ओं सर्वमृत्युप्रशमन्यै नमः १२४.ओं सर्वविघनिवारिण्यै नमः

१२५.ओं सर्वागसुंदर्यै नमः १२६.ओं सर्वसौभाग्यदायिन्यै नमः

१२७.ओं सर्वाथंसाधकचक्रखामिन्यै नमः १२८.ओं कुलोत्तीर्णयोगिन्यै नमः

१२९.ओं सर्वज्ञायै नमः १३०.ओं सर्वक्षतयै नमः

१३१.ओं सवैश्वर्यप्रदायिन्ये नमः १३२.ओं सर्वज्ञानमय्यै नमः

१३३.ओं सर्वव्याधिविनाशिन्यै नमः १३४.ओं सर्वाधारस्वरूपायै नमः

१३५.ओं सर्वपापहरायै नमः १३६.ओं सर्वानंदमय्यै नमः

१३७.ओं सर्वरक्षास्वरूपिण्यै नमः १३८.ओं सवैप्सिलफलप्रद यै नमः

१३९.ओं सर्वरक्षाकरचकस्वाभिन्यै नमः १४०.ओं निगभैयोगिन्य नमः

१४१.ओं वशिन्यै नमः १४२.ओं कामेश्वर्यै नमः

१४३.ओं मोदिन्यै नमः १४४.ओं विमलायै नमः

१४५.ओं अरुणायै नमः १४६.ओं जयिन्यै नमः

१४७.ओं सर्वेश्वयै नमः १४८.ओं महामहेश्वर्यै नमः

१४९.ओं कौलिन्यै नमः
१५०.ओं सर्वरोगहरचक्रस्वामिन्यै नमः
१५१.ओं रहस्योगिन्यै नमः
१५२.ओं बाणिन्यै नमः
१५३.ओं चापिन्यै नमः
१५४.ओं पाशिन्यै नमः
१५५.ओं अंकुशिन्यै नमः
१५६.ओं महाकामे वर्यै नमः
१५७.ओं महावज्रेश्रवर्यै नमः
१५८.ओं महाभगमालिन्यै नमः
१५९.ओं सर्वसिद्धिप्रदचक्रस्वामिन्यै नमः
१६०.ओं अतिरहस्ययोगिन्यै नमः
१६१.ओं श्रीश्रीमहाभट्टारिकायै नमः
१६२.ओं सर्वानंदमयचक्रस्वामिन्यै नमः
१६३.ओं परापररहस्योगिन्यै नमः
१६४.ओं त्रिपुरायै नमः
१६५.ओं त्रिपुरे यै नमः
१६६.ओं त्रिपुरसु दर्यै नमः
१६७.ओं त्रिपुरव सिन्यै नमः
१६८.ओं त्रिपुराश्रितायै नमः
१६९.ओं त्रिपुरामालिन्यै नमः
१७०.ओं त्रिपुरासिद्धये नमः
१७१.ओं त्रिपुरांबायै नमः
१७२.ओं महात्रिपुरसुंदर्यै नमः
१७३.ओं महामहेश्वयै नमः
१७४.ओं ओं महामहाराज्ञयै नमः
१७५.ओं महामहाशक्तये नमः
१७६.ओं महामगागुप्तायै नमः
१७७.ओं हमाहमानदायै नमः
१७८.ओं महामहास्कधायै नमः
१७९.ओं महामहाशयायै नमः
१८०.ओं महामहा श्री चक्रनगर साम्राज्ञयै नमः
१८१.ओं नमस्ते नमस्ते नमस्ते नमः

इति

देवीखडङ्गमालानामावलिः

।।समाप्ता।।

# महाराज्ञीसहस्रनामकम्

## श्री भैरव उवाच।

भगवन् वेदतत्वज्ञ मन्त्रतन्त्रविचक्षण।
शरण्य सर्वलोकेश शरणागतवत्सल।।
कथं श्रियमवाप्नोति लोके दारिद्र्यदुःखभाक्।
मान्त्रिको भैरवेशान तन्मे गदितुमर्हसि।।

## श्री भैरव उवाच।

या देवी निष्कला राज्ञी भगवत्यमलेश्वरी।
सा सृजत्यवति व्यक्तं संहरिष्यति तामसी।।
तस्या नामसहस्त्रं ते वक्ष्ये स्नेहेन पार्वति।
अवाच्यं दुर्लभं लोके दुःखदारिद्र्यनाशनम्।।
परमार्थप्रदं नित्यं परमैश्वर्यकारणम्।
सर्वागमरहस्याढ्यं सकलार्थप्रदीपनम्।।
समस्तशोकशमनं महापातकनाशनम्।
सर्वमन्त्रमयं दिव्यं राज्ञीनामसहस्त्रकम्।।

अस्य श्री महाराज्ञीनामसहस्त्रस्य, ब्रह्मा ऋषिः, गायत्रं छन्दः, श्रीभूतेश्वरीमहाराज्ञी देवता, ह्रीं बीजं, सौः शक्तिः, क्लीं कीलकं, महाराज्ञीसहस्रनामपाठे विनियोगः। ब्रह्मऋषये नमः शिरसि। गायत्रीच्छन्दसे नमो मुखे। श्री भूतेश्वरी-महाराज्ञीदेवतायै नमो हृदि। ह्रीं बीजाय नमो नाभौ। सौः

शक्तये नमो गुह्ये। क्लींकीलकाय नमः पादयोः। विनियोगाय नमः सर्वाङ्गेषु। ध्यानं कुर्यात्।

या द्वादशार्कपरिमण्डितमूर्तिरेका
सिंहासनस्थितिमतीमुरगैर्वृतां च।
देवीमनक्षगतिमीश्वरतां प्रपन्नां
तां नौमि भर्गवपुषीं परमार्थराज्ञीम्।।
चतुर्भुजां चन्द्रकलार्धशेखरां
सिंहासनस्थां भुजगोपवीतिनीम्।
पाशाङ्कुशाम्भोरुहखड्गधारिणीं
राज्ञीं भजे चेतसि राज्यदायिनीम्।।
ओंह्रींश्रींरांमहाराज्ञी क्लीं सौः पञ्चदशाक्षरी।
ह्रींस्वाहात्र्यक्षरीविद्या पराभगवती विभा।।
भास्वती भद्रिका भीमा भर्गरूपा महस्विनी।
माननीया मनीषा च मनोजा च मनोजवा।।
मानदा मन्त्रविद्या च महाविद्या षडक्षरी।
षट्कूटा च त्रिकूटा च त्रयी वेदत्रयी शिवा।।
शिवाकारा विरूपाक्षी शशिखण्डावतंसिनी।
महालक्ष्मीर्महोरस्का महौजस्का महोदया।।
मातङ्गी मोदकाहारा मदिरारुणलोचना।
साध्वी शीलवती शाला सुधाकलशधारिणी।।
खड्गिनी पद्मिनी पद्मा पद्मकिञ्जल्करञ्जिता।

हृत्पद्मवासिनी हृद्या पानपात्रधरा धरा।
धराधरेन्द्रतनया दक्षिणा दक्षजा दया।
दयावती महामेधा मोदिनी बोधिनी गदा।।
गदाधराचिंता गोधा गङ्गा गोधावरी गया।
महाप्रभावसहिता महोरगविभूषणा।
महामुनिकृतातिथ्या माध्वी मानवती मघा।
बाला सरस्वती लक्ष्मीर्दुर्गा दुर्गतिनाशिनी।।
शारी शरीरमध्यस्था वैखरी खेचरेश्वरी।
शिवदा शिववक्षःस्था कालिका त्रिपुरापुरी।।
पुरारिकुक्षिमध्यस्था मुरारिहृदयेश्वरी।
बलारिराज्यदा चण्डी चामुण्डा मुण्डधारिणी।।
मुण्डमालाञ्चिता मुद्रा क्षोभणा कर्षणक्षमा।
ब्राह्मी नारायणीदेवी कौमारी चापराजिता।।
रुद्राणी च शचीन्द्राणी वाराही वीरसुन्दरी।
नारसिंही भैरवेशी भैरवाकारभीषणा।।
नागालङ्कारशोभाढ्या नागयज्ञोपवीतिनी।
नागकङ्कणकेयूरा (१००) नागहारा सुरेश्वरी।।
सुरारिघातिनी पूता पूतना डाकिनीक्रिया।
क्रियावती कुरी कृत्या डाकिनी लाकिनी लया।।
लीलावती रसाकीर्णा नागकन्यामनोहरा।
हारकङ्कणशोभाढ्या सदानन्दा शुभङ्करी।।

प्रहासिनी मधुमती सरसी स्मरमोहिनी।
महोग्रवपुषी वार्ता वामाचारप्रिया सिरा।।
सुधामयी वेणुकरा वैरिघ्नीवीरसुन्दरी।
वारिमध्यस्थिता वामा वामनेत्रा शशिप्रभा।।
शर्मदा शङ्करी सीता रवीन्दुशिखिलोचना।
मदिरा वारुणी वीणागीतिज्ञा मदिरावती।।
वटस्था वारुणीशक्तिर्वटजा वटवासिनी।
वटुकी वीरसूर्वन्द्या स्तम्भिनी मोहिनी च मुत्।।
मुद्गराङ्कुशहस्ता च वराभयकरा कुटी।
पाटीरद्रुमवल्ली च वटिका वटुकेश्वरी।।
इष्टदा कृषिभूः कीरी रेवतीरमणप्रिया।
रोहिणी रेवती रम्या रमणा रोमहर्षिणी।।
रसोल्लासा रसासारा सारिणी तारिणी तडित्।
तरीतरित्रहस्ता च तोतुला तरणिप्रभा।।
रत्नाकरप्रिया रम्भा रत्नालङ्कारशोभिता।
रुक्माङ्गदा गदाहस्ता गदाधरवरप्रदा।।
षड्रसा द्विरसा माला मालाभरणभूषिता।
मालती मल्लिकामोदा मोदकाहारवल्लभा।।
वल्लभी मथुरा माया काशी काञ्ची ललन्तिका।
हसन्तिका हसन्ती च भ्रमन्ती च वसन्तिका।।
क्षेमा क्षेमङ्करी क्षामा क्षोमवस्त्रा (२००) क्षणेश्वरी।

क्षणदा क्षेमदा सीरा सीरपाणिसमर्चिता ।।
क्रीता क्रीतातपा क्रूरा कमनीया कुलेश्वरी ।
कूर्चबीजा कुठाराढ्या कूर्मिणी कूर्मसुन्दरी ।।
कारुण्या चैव काश्मीरी दूती द्वारवती ध्रुवा ।
ध्रुवस्तुता ध्रुवगतिः पीठेशी बगलामुखी ।।
सुमुखी शोभनानीतिः रत्नज्वालामुखी नतिः ।
अलकोऽ्जयिनी भोग्या भङ्गी भोगावती बला ।।
धर्मराजपुरी पूता पूर्णासत्त्वाऽमरावती ।
अयोध्या योधनीया च युगमाता च यक्षिणी ।।
यज्ञेश्वरी योगगम्या योगिध्येया यशस्विनी ।
यशोवती च चार्वङ्गी चारुहासा चलाचला ।।
हरीश्वरी हरेर्माया मायिनी वायुवेगिनी ।
अम्बालिकाऽम्बा भर्गेशी भृगुकूटा महामतिः ।।
कोशेश्वरी च कमला कीर्तिदा कीर्तिवर्धिनी ।
कठोरवाक्कुहूमूर्तिः चन्द्रबिम्बसमानना ।।
चन्द्रकुङ्कुमलिप्ताङ्गी कनकाचलवासिनी ।
मलयाचलसानुस्था हिमाद्रितनयातनुः ।।
हिमाद्रिकुक्षिदेशस्था कुब्जिका कोसलेश्वरी ।
कारैकनिगडा गूढा गूढगुल्फातिगोपिता ।।
तनुजा तनुरूपा च बाणचापधरा नुतिः ।
धुरीणा धूम्रवाराही धूम्रकेशाऽरुणानना ।।

अरुणेशी रतिः स्वातिर्गरिष्टा च गरीयसी।
महानसी महाकारा सुरासुरभयङ्करी।।
अणुरूपा महज्जयोतिरनिरुद्धसरस्वती।
श्यामा श्याममुखी शान्ता श्रान्तसन्तापहारिणी।
गौर्गण्या गोमयी गुह्या गोमती गुरुवागऽया।
गीतसन्तोषसंसक्ता (३००) ग्राहिणी ग्रहिणी ग्रहा।।
गणप्रिया गजगतिर्गान्धारी गन्धमोदिनी।
गन्धमादनसानुस्था सह्याचलकृतालया।।
गजाननप्रिया गव्या ग्राहिका ग्राहवाहना।
गुहप्रसूर्गुहावासा ग्रहमालाविभूषणा।।
कौबेरी कुहका भ्रान्तिस्तर्कविद्या प्रियङ्करी।
पीताम्बरा पटाकारा पताका सृष्टिजा सुधा।।
दाक्षायणी दक्षसुता दक्षयज्ञविनाशिनी।
ताराचक्रस्तिथा तारा तुरी तुर्या तुटिस्तुला।।
सन्ध्यात्रयी सन्धिजरा सन्ध्यातारुण्यलालिता।
ललिता लोहिता लम्पा चम्पा कम्पाकुला सृणिः।।
सृतिः सत्यवती स्वस्था समाना मानवर्धिनी।
महोमयी मनस्तुष्टिः कामधेनुः सनातनी।।
सूक्ष्मरूपा सूक्ष्ममुखा स्थूलरूपा कलावती।
तलातलाश्रया सिन्धुस्त्र्यम्बिका लम्पिका जया।।
सौदामिनी सुधादेवी सनकर्षिसमर्चिता।

मन्दाकिनी च यमुना विपाशा नर्मदानदी ।।
गण्डक्यैरावती सिप्रा वितस्ता च सरस्वती।
रेवा चैरावती चेक्षुमती सागरवासिनी ।।
देवकी देवमाता च देवेशी देवसुन्दरी।
दैत्यघ्नी दमनी दात्री दितिर्दितिजसुन्दरी ।।
विद्याधरी च विद्येशी विद्याधरजसुन्दरी।
मेनका चित्रलेखा च चित्रिणी च तिलोत्तमा ।।
उर्वशी मोहिनी रम्भा चाप्सरोगणसुन्दरी।
यक्षिणी यक्षलोकेशी नरवाहनपूजिता ।।
यक्षेन्द्रतनया योग्या यक्षनायकसुन्दरी।
गन्धवती चिता गन्धा सुगन्धा गीततत्परा ।।
गन्धर्वतनया नम्रा (४००) गीतिर्गनधर्वसुन्दरी।
मन्दोरदी करालाक्षी मेघनादवरप्रदा ।।
मेघवाहनसन्तुष्टा मेघमूर्तिश्च राक्षसी।
रक्षोहन्त्री केकसी च रक्षोनायकसुन्दरी ।।
किंन्नरी कम्बुकण्ठी च कलकण्ठस्वना सुधा।
किंमुखी हयवक्त्रा च केला किन्नरसुन्दरी ।।
पिशाची राजमातङ्गी उच्छिष्टपदसंस्थिता।
महापिशाचिनी चान्द्री पिशाचकुलसुन्दरी ।।
गुह्येश्वरी गुह्यरूपा गुर्वी गुह्यकसुन्दरी।
सिद्धिप्रदा सिद्धवधूः सिद्धेशी सिद्धसुन्दरी।

भूतेश्वरी भूतालया भूतधात्री भयापहा।
भूतभीतिहरी भव्या भूतजा भूतसुन्दरी।।
पृथ्वी पार्थिवलोकेशी पृथा विष्णुसमर्चिता।
वसुन्धरा वसुनता पृथिवी भूमिसुन्दरी।।
अम्भोधितनयाऽलुप्ता जलजाक्षी जलेश्वरी।
अमूर्तिरम्मयी मारी जलस्था जलसुन्दरी।।
तेजस्विनी महोधात्री तैजसी सूर्यबिम्बगा।
सूर्यकान्तिः सूर्यतेजास्तेजोरूपैकसुन्दरी।।
वायुवाहा वायुमुखी वायुलोकैकसुन्दरी।
गगनस्था खेचरेशी शून्यरूपा निराकृतिः।।
निराभासा भासमाना द्युतिराकाशसुन्दरी।
क्षितिमूर्तिधराऽनन्ता क्षितिभृल्लोकसुन्दरी।।
अब्धियाना रत्नशोभा वरुणेशी वरायुधा।
प़ाशहस्ता पोषणा च वरुणेश्वरसुन्दरी।।
अनलैकरुचिज्योतिः पंचानिलगतिस्थितिः।
प्राणापानसमानेच्छा चोदानव्यानरूपिणी।।
पंचवातगतिर्नाडीरूपिणी वातसुन्दरी।
अग्निरूपा वह्निशिखा वडवानलसन्निभा।।
हेतिर्हविर्हुतज्योतिरग्निजा वह्निसुन्दरी।
सोमेश्वरी सोमला सोमपानपरायणा।।
सौम्यानना सौम्यरूपा सोमस्था सोमसुन्दरी।

सूर्यप्रभा सूर्यमुखी सूर्यजा सूर्यसुन्दरी।
याज्ञिकी यज्ञभगेच्दा यजमानवरप्रदा।
याजकी यज्ञविद्या च यजमानैकसुन्दरी (५००)।।
आकाशगामिनी वन्द्या शब्दजाकाशसुन्दरी।
मीनप्रिया मीननेत्रा मीनाशा मीनसुन्दरी।।
कूर्मपृष्ठगता कूर्मी कूर्मजा कूर्मरूपिणी।
वाराही वीरसूर्वह्यी वरारोहा मृगेक्षणा।।
वराहमूर्तिर्वाचाला दंष्ट्रा वराहसुन्दरी।
नरसिंहाकृतिर्देवी दुष्टदैत्यनिसूदिनी।।
प्रद्युम्नवरदा नारी नरसिंहैकसुन्दरी।
वामजा वामनाकारा नारायणपरायणा।।
बलिदानवदर्पघ्नी वाम्या वामनसुन्दरी।
रामप्रिया रामकीलिः क्षत्रवंशक्षयङ्करी।।
दनुपुत्री राजकन्या रामा परशुधारिणी।
भार्गवी भार्गवेष्टा च जामदग्न्यवरप्रदा।।
कुठाराधारिणी रात्रिर्जामदग्न्यैकसुन्दरी।
सीतालक्ष्मणसेव्या च रक्षःकुलविनाशिनी।।
रामप्रिया च शत्रुघ्नी शत्रुघ्नभरतेष्टदा।
लावण्यामृतधाराढ्या लवणासुरघातिनी।।
लोहितास्या प्रसन्नास्या स्वारामा रामसुन्दरी।
कृष्णकेशा कृष्णामुखी यादवान्तकरी लया।।

यादोगणार्चिता योज्या राधाश्रीकृष्णसुन्दरी।
बुद्धप्रसूर्बुद्धदेवी जिनमार्गपरायणा।।
जितक्रोधा जितालस्या जिनसेव्या जितेन्द्रिया।
जिनवंशधरोग्रा च नीलान्ता बुद्धसुन्दरी।।
काली कालाहलप्रीता प्रेतवाहा सुरेश्वरी।
कल्किप्रिया कम्बुधरा कलिकालैकसुन्दरी।।
विष्णुमाया ब्रह्ममाया शाम्भवी शववाहना।
इन्द्रावरजवक्षःस्था स्थाणुपत्नी पलालिनी।।
जृम्भिणी जृम्भहर्त्रीं च जृम्भमाणकचालका
कुलाकुलपदेशानी पददानफलप्रदा।।
कुलवागीश्वरी कुल्या कुलजा कुलसुन्दरी।
पुरन्रेष्टा तारुण्यालया पुण्यजनेश्वरी।।
पुण्योत्साहा पापहन्त्री पाकशासनसुन्दरी।
सूर्यकोटिप्रतीकाशा सूर्यतेजोमयी मषी।।
लेखिनी भ्राजिता रज्जुरूपिणी सूर्यसुन्दरी (६००)।
चन्द्रिका च सुधाधारा ज्योत्स्ना शीतांशुसुन्दरी।।
लोलाक्षी च शताक्षी सहस्राक्षी सहस्रपात्।
सहस्रशीर्षा चेन्द्राक्षी सहस्रभुजवल्लिका।।
कोटिरत्नांशुशोभा च शुभ्रवस्त्रा शतानना।
शतानन्दा श्रुतिधरा पिङ्गला चोग्रनादिनी।।
सुशुम्ना हारकेयूरनूपुरारावसङ्कुला।

घोरनादा घोरमुखी चोन्मुखी चोल्मुकायुधा।।
गोपिता गूर्जरी गाथा गायत्री वेदवल्लभा।
वल्लकीस्वननादा च नादविद्या नदीतटी।।
बिन्दुरूपा चक्रयोनिर्बिन्दुनादस्वरूपिणी।
चक्रश्वरी भैरवेशी महाभैरववल्लभ।।
कालभैरवभार्या च कल्पान्तरङ्गनर्तकी।
प्रलयानलधूम्राभा योनिमध्यकृतालया।।
भूचरी खेचरीमुद्रा नवमुद्राविलासिनी।
वियोगनी श्मशानस्था श्मशानार्चनतोषिता।।
भस्वाराङ्गी भर्गशिखा भर्गवामाङ्गवासिनी।
भद्रकाली विश्वकाली श्रीकाली मेघकालिका।।
नीरकाली कालरात्रिः काली कामेशकालिका।
इन्द्रकाली पूर्वकाली पश्चिमाम्नायकालिका।।
श्मशानकालिका भद्रकाली श्रीकृष्णकालिका।
क्रींकारोत्तरकाली श्रींहुंह्रींदक्षिणकालिका।
सुन्दरी त्रिपुरेशानी त्रिकुटा पुटभैरवी।।
त्रिलोकजननी त्रेता महात्रिपुरसुन्दरी।
कामेश्वरी कामकला कालकामेशसुन्दरी।।
त्र्यक्षरी त्र्यक्षरीदेवी भावना भुवनेश्वरी।
एकाक्षरी चतुष्कूटा त्रिकूटेशी लयेश्वरी।।
चतुर्वर्णा च वर्णेशी वर्णाढ्या चतुरक्षरी।

पंचाक्षरी च षड्वक्त्रा षटकूटा च षडक्षरी।।
सप्ताक्षरी नवानेवी परमाष्टाक्षरेश्वरी।
नवमी पश्चमी षष्ठी नागेशी च नवाक्षरी।।
दशाक्षरी दशास्येशी देविकैकादशाक्षरी।
द्वादशादित्यसङ्काशा (७००) द्वादशी द्वादशाक्षरी।
त्रयोदशी वेदगर्भा वाद्या त्रयोदशाक्षरी।
चतुर्दशाक्षरी विद्या विद्यापश्चदशाक्षरी।।
षोडशी सर्वविद्येशी महाश्रीषोडशाक्षरी।
महाश्रीषोडशीविद्या चिन्तामणिमनुप्रिया।।
द्वाविंशत्यक्षरी श्यामा महाकालकुटुम्बिनी।
वज्रतारा कालतारा नारी तारोग्रतारिणी।।
कामतारा शब्दतारा स्पर्शतारा रसाश्रया।
रूपतारा गन्धतारा महानीलसरस्वती।।
कालज्वाला वह्निज्वाला ब्रह्मज्वाला जटाकुला।
विष्णुज्वाला जिष्णुशिखा भद्रज्वाला करालिनी।।
विकरालमुखीदेवी कराली भूतिभूषणा।
चिताशयासना चिन्ता चितामण्डलमध्यगा।
भूतभैरवसेव्या च भूतभैरवपालिनी।।
बन्धकी बद्धसंमुद्रा भवबन्धविनाशिनी।।
भवानी देवदेवेशी दीक्षा दीक्षितपूजिता।
साधकेशी सिद्धिदात्री साधकानन्दवर्धिनी।।

साधकाश्रयभूता च साधकेष्टफलप्रदा।
रजोवती राजसी च रजकी च रजस्वला।।
पुष्पप्रिया पुष्पवती स्वयम्भूपुष्पमालिका।
स्वयम्भूपुष्पगन्धाढ्या पुलस्त्यसुतघातिनी।।
पात्रहस्ता सुता पौत्री पीतास्या पीतभूषणा।
पिङ्गानना पिङ्गकेशी पिङ्गला पिङ्गलेश्वरी।।
मङ्गला मङ्गलेशानी सर्वमङ्लमङ्गला।
पुरूरवेश्वरी पाशधरा चापधराऽधुरा।।
पुण्यधात्री पुण्यमयी पुण्यलोकनिवासिनी।
होतृसेव्या हकारस्था सकारस्था सुखावती।।
सखी शोभावती सत्या सत्याचारपरायणा।
सतीशानकलेशानी वामदेवकलाश्रिता।।
सद्योजातकलादेवी शिवाऽघोरकलाकृतिः।
शर्वरी क्षीरसदृशी क्षीरनीरविवेकिनी (८००)।।
वितर्कनिलया नित्या नित्यक्लिन्ना पराम्बिका।
पुरारिदयिता दीर्घा दीर्घनासाऽल्पभाषिणी।।
काशिका कौशिकी कोश्या कोशदा रूपवर्धिनी।
तुष्टिः पुष्टिः प्रजाप्रीता प्राजिका पूजकप्रिया।।
प्रजावती गर्भवती गर्भपोषणपोषिता।
शुक्लवासाः शुक्लरूपा शुचिवासा जयावहा।।
जानकी जन्यजनका जनतोषणतत्परा।

वादप्रिया वाद्यरता वादिता वादसुन्दरी।।
वाक्स्तम्भिनी कीरवाणी धीराधीरा धुरन्धरा।
स्तनन्धयी सामिधेनी निरानन्दा निरालया।।
समस्तसुखदा सारा वारांनिधिवरप्रदा।
वालुकी वीरपानेष्टा वसुधात्री वसुप्रिया।।
शुक्रनान्दा शुक्ररसा शुक्रपूज्या शुकप्रिया।
शुकी च शुकहस्ता च समस्तनरकान्तका।।
समस्ततत्त्वनिलया भगरूपा भगेश्वरी।
भगबिम्बा भगाह्वया भगलिङ्गस्वरूपिणी।।
भगालिङ्गेश्वरी श्रीदा भगलिङ्गामृतस्रवा।
क्षीराशना क्षीररुचिराज्यपानपरायणा।।
मधुपानपरा प्रौढ़ा पीवरांसा परंपरा।
पिलम्पिला पटोलेशा पाटलारुणलोचना।।
क्षीराम्बुधिप्रिया क्षीबा सरला सरलायुधा।
संग्रामा सुनया स्रस्ता संसृतिः सनकेश्वरी।।
कन्या कनकरेखा च कान्यकुब्जनिवासिनी।
काञ्चनाभतनुः काष्ठा कुष्ठरोगविनाशिनी।।
कठोरमूर्धजा कुन्ती कुन्तायुधधरा धृतिः।
चर्माम्बरा क्रूरनखा चकोराक्षी चतुर्भुजा।।
चतुर्वेदप्रिया चाट्वी चतुर्वर्गफलप्रदा।
ब्रह्माण्डचारिणी स्फूर्तिर्ब्रह्माणी ब्रह्मसंमता।।

सत्कारकारिणी सूतिः सूतिका लतिकालता (६००)।
कल्पवल्ली कृषाङ्गी च कल्पपादपवासिनी।।
कल्पपाशा महाविद्या विद्याराज्ञी सुखाश्रया।
भूतिराज्ञी विश्वराज्ञी रुद्रराज्ञी जटाश्रया।
नागराज्ञी वंशराज्ञी वीराज्ञी रजःप्रिया।।
सत्त्वराज्ञी तमोराज्ञी गुणाराज्ञी चलाचला।
वसुराज्ञी सत्यराज्ञी तपोराज्ञी जपप्रिया।।
मन्त्रराज्ञी वेदराज्ञी तन्त्रराज्ञी श्रुतिप्रिया।
वेदराज्ञी मन्त्रिराज्ञी दैत्यराज्ञी दयाकरा।।
कालराज्ञी प्रजाराज्ञी तेजोराज्ञी हराश्रया।
पृथ्वीराज्ञी पयोराज्ञी वायुराज्ञी मदालसा।।
सुधाराज्ञी सुराज्ञी भीमराज्ञी भयोज्झिता।
तथ्यराज्ञी जयाराज्ञी महाराज्ञी कुलाकृतिः।।
वामराज्ञी चीनराज्ञी हरिराज्ञी हलीश्वरी।
पराज्ञी यक्षाराज्ञी भूतराज्ञी शिवासना।।
वटुराज्ञी प्रेतराज्ञी शेषराज्ञी शमप्रदा।
आकाशराज्ञी राजेशी राज़राज्ञी रतिप्रिया।।
पातालराज्ञी भूराज्ञी प्रेतराज्ञी विषापहा।
सिद्धराज्ञी विभाराज्ञी तेजोराज्ञी विभामयी।।
भास्वद्राज्ञी चन्द्रराज्ञी ताराराज्ञी खवासिनी।
ग्रहराज्ञी लताराज्ञी वृक्षराज्ञी मतिप्रदा।।

धीरराज्ञी मनोराज्ञी मनुराज्ञी च काश्यपी।
मनुराज्ञी रत्नराज्ञी युगाराज्ञी मणिप्रभा।।
सिन्धुराज्ञी नदीराज्ञी नदराज्ञी दरीस्थिता।
बिन्दुराज्ञी नादराज्ञी लयराज्ञी सदीश्वरी।
ईशानराज्ञी राजेशी स्वाहाराज्ञी महत्तरा।।
वाह्निराज्ञी योगिराज्ञी यज्ञराज्ञी चिदाकृतिः।
जगद्राज्ञी तत्त्वराज्ञी वाग्राज्ञी विश्वरूपिणी।।
पश्चदशाक्षरीराज्ञी ओंह्रींभूतेश्वरेश्वरी।(१०००)

## फलश्रुति

इतीदं मन्श्सर्वस्वं राज्ञीनामसहस्रकम्।।
पञ्चदशाक्षरीतत्त्वं मन्त्रसारं मनुप्रियम्।
सर्वतत्त्वमयं पुण्यं महापातकनाशनम्।।
सर्वसिद्धिप्रदं लोके सर्वरोगनिवर्हणम्।
सर्वोत्पातप्रशमनं ग्रहशान्तिकरं परम्।।
सर्वदेवप्रियं प्राज्यं सर्वशत्रुभयापहम्।
सर्वदुःखौघशमनं सर्वशोकविनाशनम्।।
पठेद्वा पाठयेन्नाम्नां सहस्रं शक्तिसंनिधौ।
दूरादेव पलायन्ते विपदः शत्रुभीतयः।।
राक्षसा भूतवेतालाः पन्नगा हरिणद्विषः।

पठनाद्विद्रवन्त्याशु महाकालादिव प्रजाः।।
श्रवणात्पातकं नश्येच्छ्रावयेद्यः स भाग्यवान्।
(नानाविधानि भोगानि संभुज्य पृथिवीवले।।)
गमिष्यति परां भूमिं त्वरितं नात्र संशयः।
अश्वमेधसहस्रस्य वाजिपेयस्य कोटयः।
गङ्गास्नानसहस्रस्य चान्द्रायणायुतस्य च।।
तप्तकृच्छ्रैकलक्षस्य राजसूयस्य कोटयः।
सहस्रनामपाठस्य कलां नार्घन्ति षोडशीम्।।
सर्वसिद्धीश्वरं साध्यं राज्ञीनामसहस्रकम्।
मन्त्रगर्भं पठेद्यस्तु राज्यकामो महेश्वरि।।
वर्षमेकं शतावर्तं महाचीनक्रमाकुलः।
शक्तिपूजापरो रात्रौ स लभेद्राज्यमीश्वरि।।
पुत्रकामी पठेत् सायं चिताभस्मानुलेपनः।
दिगम्बरो मुक्तकेशः शतावर्तं महेश्वरी।।
श्मशाने तु लभेत् पुत्रं साक्षाद्वैश्रवणोपमम्।
परदारार्चनरतो भगबिम्बं स्मरन् सुधीः।।
पठेन्नामसहस्रं तु वसुकामी लभेद् धनम्।
रवौ वारत्रयं देवि पठेन्नामसहस्रकम्।।
मृदुविष्टरनिर्विष्टः क्षीरपानपरायणः।
स्वप्ने सिंहासनां राज्ञीं वरदां भुवि पश्यति।।
क्षीरचर्वणसन्तृप्तो वीरपानरसाकुलः।

यः पठेत् परया भक्तया राज्ञीनामसहस्रकम् ।।
स सद्यो मुच्यते घोरान्महापातकजाद्भयात् ।
यः पठेत् साधको भक्त्या शक्तिवक्षःकृतासनः ।।
शुक्रोत्तरणकाले तु तस्य हस्तेऽष्टिसिद्धयः ।
यः पठेन्निशि चक्राग्रे परस्त्रीध्यानतत्परः ।।
सुरासवरसानन्दी स लभेत् संयुगे जयम् ।
इदं नामसहस्रं तु सर्वमन्त्रमयं शिवे ।।
भूर्जत्वचि लिखेद्रात्रौ चक्रार्चनसमागमे ।
अष्टगन्धेन पूतेन वेष्टयेत् स्वर्णपत्रके ।।
धारयेत् कण्ठदेशे तु सर्वसिद्धिः प्रजायते ।
यो धारयेन्महारक्षां सर्वदेवातिदुर्लभाम् ।।
रणे राजकुले द्यूते चौररोगाद्युपद्रवे ।
स प्राप्नोति जयं सद्यः साधको वीरनायकः ।।
श्रीचक्रं पूजयेद्यस्तु धारयेद्वर्म मस्तके ।
पठेन्नामसहस्रं तु स्तोत्रं मन्त्रात्मकं तथा ।।
किं किं न लभते कामं देवानामपि दुलर्भम् ।
सुरापानं ततः संविच्चर्वणं मीनमांसकम् ।।
नवकन्यासमायोगो मुद्रा वीणारवः प्रिये ।
सत्सङ्गो गुरुसांनिध्यं राज्ञीश्रीचक्रमग्रतः ।।
यस्य देवि स एव स्याद्योगी ब्रह्मविदीश्वरः ।
इदं रहस्यं परमं भक्त्या तव मयोदितम् ।।

अप्रकाश्यमदातव्यं न देयं यस्य कस्याचित्।
अन्यशिष्याय दुष्टाय दुर्जनाय दुरात्मने।।
गुरुभक्तिविहीनाय सुरास्त्रीनिन्दकाय च।
नास्तिकाय कुशीलाय न देयं तत्त्वदर्शिभिः।।
देयं शिष्याय शान्ताय भक्तायाद्वैतवादिने।
दीक्षिताय कुलीनाय राज्ञीभक्तिरताय च।।
दत्त्वा भोगापवर्गत्वं लभेत् साधकसत्तमः।।
इति नामसहस्रं तु राज्ञ्याः शिवमुखोदितम्।
अत्यन्तदुर्लभं गोप्यं गोपनीयं स्वयोनिवत्।।
इति श्रीरुद्रयामले तन्त्रे दशविद्यारहस्ये।
श्री महाराज्ञीसहस्रनामकम्।।

♦♦♦




## क्षीर भवानी पीठ, भवानी नगर, जानीपुर, जम्मू।

पुस्तक प्राप्त स्थान
अर्धरात्री श्री महाराज्ञा सेवा संस्था ट्रस्ट (रजि0)
माता क्षीर भवानी पीठ, भवानी नगर, जानीपुर, जम्मू।

Composed and Printed By: Ramesh Tickoo - 9622118949